3 1 2 3 2 3 20॰ 3 2 3 2
1467. वृष्टिद्यावा - वृष्टि- द्यावा - रीत्यापा-रीति-आपा। इषः
3012 1 20 3 1 2 1 20 3 1 2
- पतीइति - दानुमत्याः । बृहन्तम्-गर्तम्-आशातेइति।।
आ-8,अ-3,प-34,गि-वि-2-11

3 1 2 3 2 3 2 1 20 1 20 3 1 2
1468 युञ्जन्ति - ब्रध्नम् -अरुषम् । चरन्तम् - परि - तस्थुषः ।
1 20 3 2 3 2
रोचन्ते - रोचना - दिवि ।।

3 1 2 3 1 2 0 3012 1 20 3
1469. युञ्जन्ति-अस्य-काम्या। हरीइति-विपक्षसा-वि-पक्षसा
1 20 1 2 0 3 1 2 3 1 2 3 1 20
- रथे ।शोणा - धृष्णूइति - नृवाहसा - नृ - वाहसा।।

3 2 3 2 3 1 2 3 1 2 1 2 0 3
1470.केतुम् - कृण्वन् - अकेतवे - अ- केतवे । पेशः - मर्याः -
1 2 3 1 2 3 1 2 3
अपेशसे - अ - पेशसे । सम् - उषद्भिः - अजायथाः ।।
आ-9,अ-4,प-35,भु-वि-5,फु-12

इति चतुर्थः खण्डः।।4।।

3 2 1 20 3 1 2 0 3 1 2 0 3 2
1471. अयम्- सोमः- इन्द्र- तुभ्यम्-सुन्वे। तुभ्यम्-पवते-त्वम्
3 2 3 2 3 2 3 2 120
- अस्य-पाहि। त्वम्- ह -यम्-चकृषे-त्वम्-ववृषे। इन्दुम्
1 20 1 2 0 1 20
- मदाय - युज्याय - सोमम् ।।

2 3 1 20 3 2 3 2 3 1 2
1472. सः - ईम् - रथः - न - भुरिषाट्-अयोजि। महः-पुरुणि
3 1 2 1 20 3 1 2 0 3 20॰ 3 2
-सातये -वसूनि। आत्- ईम्-विश्वा - नहुष्याणि-जाता ।
1 20 3 1 20 3 2 3
स्वर्षाता - स्वः - साता- वने-ऊर्ध्वा - नवन्त।।

1473. शुष्मी-शर्द्धः-न-मारुतम्-पवस्व । अनभिशस्ता-अन्-अभिशस्ता-दिव्या-यथा-विट्।आपः- न-मक्षु-सुमतिः-सु- मतिः- भव - नः । सहस्राप्साः - सहस्र - अप्साः -पृतनाषाट् -न-यज्ञः।। आ-17,अ- 4,प-66,घू-वि-13-13

1474. त्वम् - अग्ने - यज्ञानाम् - होता । विश्वेषाम् - हितः । देवेभिः - मानुषे - जने ।।

1475. सः - नः - मन्द्राभिः - अध्वरे । जिह्वाभिः - यज - महः। आ - देवान् - वक्षि - यक्षि - च ।।

1476. वेत्थ - हि - वेधः - अध्वनः । पथः - च - देव - अञ्जसा। अग्ने - यज्ञेषु - सुक्रतो - सु - क्रतो ।।

आ-9,अ-1,प-34,पु-वि-8-14

1477. होता-देवः-अमर्त्यः-अ-मर्त्यः। पुरस्तात्-एति- मायया । विदथानि - प्रचोदयन् - प्र - चोदयन् ।।

1478. वाजी - वाजेषु - धीयते । अध्वरेषु - प्र - नीयते । विप्रः - वि - प्रः - यज्ञस्य - साधनः ।।

1479. धिया - चक्रे - वरेण्यः । भूतानाम् - गर्भम् - आ - दधे।

120 312 120
दक्षस्य - पितरम् - तना।। आ-9,अ-3,प-33,दि-वि-7,डे-15

इति पञ्चमः खण्डः।।6।।

2 32 3 120 120 3 12
1480. आ - सुते - सिञ्चत - श्रियम् । रोदस्योः - अभिश्रियम्
3 120 32 3 2
- अभि - श्रियम् । रसा - दधीत - वृषभम् ।।

2 3 2 320॰ 312 312
1481. ते-जानत-स्वम्-ओक्यम् । सम्-वत्सासः-न-मातृभिः।
32 3 12
मिथः - नसन्त - जामिभिः ।।

120 120 120 3 2 312 32
1482. उप - स्रक्वेषु - बप्सतः । कृण्वते - धरुणम् - दिवि ।
120 32 120 12
इन्द्रे - अग्ना - नमः - स्वऽ3रिति ।।

आ-8,अ-1,प-32,टा-वि-7-16

2 3 120 120 120 32 32
1483. तत्- इत्-आस - भुवनेषु - ज्येष्ठम् । यतः - जज्ञे - उग्रः
312 323 2 3 2 3 2
- त्वेषनृम्णः- त्वेष- नृम्णः। सद्यः- स- द्यः- जज्ञानः- नि
3 120 120 120 120 120
-रिणाति-शत्रून्। अनु - यम् - विश्वे - मदन्ति- ऊमाः।।

3 2 120 120 120 3 120
1484.वावृधानः - शवसा - भूर्योजाः - भूरि - ओजाः । शत्रुः
312 312 3 120 3
- दासाय - भियसम् - दधाति । अव्यनत् - अ - व्यनत्
3 2 3 2 3 120 3
- च - व्यनत् - वि- अनत्- च- सस्नि । सम् - ते- नवन्त
120 3 120
- प्रभृता - प्र - भृता - मदेषु ।।

1 2 120 120 3 120 3 2
1485. त्वेइति - क्रतुम् -अपि - वृञ्जन्ति - विश्वे । द्विः-यत्-एते
120 120 3 2 1 20 3 1 2
- त्रिः - भवन्ति - ऊमाः । स्वादोः - स्वादीयः -स्वादुना
3 2 3 2 120 120 3 2 3
- सृज - सम्-अदः- सु - मधु- मधुना - अभि - योधीः ।।
आ-24,अ-6,प-70,तौ-वि-19-17

1 20 3 2 120 120
1486. त्रिकद्रुकेषु - त्रि - कद्रुकेषु - महिषः - यवाशिरम् - यव
3 2 3 2 3 2 1 20
- आशिरम् - तुविशुष्मः - तुवि - शुष्मः । तृम्पत् -सोमम्
3 1 20 3 2 3 2 3 2
- अपिबत्- विष्णुना - सुतम् - यथावशम्-यथा-वशम्।
3 1 20 1 20 1 20 3 2 3 2
सः - ईम् - ममाद - महि -कर्म-कर्तवे-महाम्-उरुम्। सः-
3 2 3 2 3 2 1 20 3 2 1 20
एनम् -सश्चत्-देवः -देवम्-सत्यः-इन्दुः-सत्यम्-इन्द्रम्।।

3 2 3 2 1 20 3 2 1 20 3
1487. साकम् - जातः - क्रतुना - साकम् -ओजसा-ववक्षिथ।
3 2 3 2 3 20 3 2 1 20 1 20
साकम् - वृद्धः - वीर्यैः - सासहिः -मृधः-विचर्षणिः-वि
3 1 20 1 20 3 2 1 20 1 20 1 20
- चर्षणिः । दाता -राधः - स्तुवते-काम्यम्-वसु-प्रचेतन
3 2 3 2 3 2 3 2 1 2 0
-प्र-चेतन । सः - एनम्-सश्चत्-देवः-देवम्-सत्यः-इन्दुः
3 2 1 20
- सत्यम् - इन्द्रम् ।।

1 20 1 20 3 2 1 20 1 20 3 2 3
1488.अध-त्विषीमान्-अभि-ओजसा-कृविम्-युधा-अभवत्
2 1 20 3 1 2 3 1 2 3
।आ- रोदसीइति- अपृणत्-अस्य- मज्मना- प्र-वावृधे।

1 20 3 2 3 2 3 1 2 3 2
अधत्त । अन्यम् -अन् -यम्- जठरे- प्र-ईम्-अरिच्यत-प्र
3 2 3 2 3 2 3 2 1 2 0
-चेतय। सः - एनम् - सश्चत् - देवः- देवम् - सत्यः-इन्दुः
3 2 1 2 0
-सत्यम्-इन्द्रम्।। आ-29,अ-7,प-99,बू-वि,8-झै-18

इति षष्ठः खण्डः।।6।।

षष्ठप्रपाठकश्च समाप्तः।।6।।

इति त्रयोदशोऽध्यायः।।13।।

****

## अथ चतुर्दशोऽध्यायः।।

अथ सप्तमप्रपाठके प्रथमोऽर्धः।।

3 2 1 20 3 2 1 20 3
1489. अभि - प्र - गोपतिम् - गो - पतिम् -गिरा। इन्द्रम् -अर्च
1 2 0 3 2 3 2 3 1 2 1 20 3
- यथा -विदे । सूनुम् -सत्यस्य-सत्पतिम्-सत्-पतिम्।।
2 1 20 3 1 20 1 2 0 3 1 2
1490. आ - हरयः - ससृज्रिरे । अरुषीः - अधि - बर्हिषि ।
1 20 3 2 3 1 2 3 1 20
यत्र - अभि - सन्नवामहे - सम् - नवामहे ।
1 2 0 1 20 3 1 2 3 1 20 3 2 3 1 2
1491. इन्द्राय-गावः-आशिरम्- आ -शिरम् । दुदुह्रे - वज्रिणे
1 20 3 2 3 2 3 2
- मधु । यत् - सीम - उपह्वरे - उप - ह्वरे - विदत् ।।
आ-13,अ-5,प-40,दु-वि-3-1
2 3 1 2 0 1 20 1 20 3 1 2 3 1 20
1492. आ - नः - विश्वासु - हव्यम् । इन्द्रम् - समत्सु- स-मत्सु
3 1 20 1 2 0 1 20 3
- भूषत । उप - ब्रह्माणि - सवनानि - वृत्रहन् -वृत्र-हन्।
2 3 2 3
परमज्याः - परम -ज्याः - ऋचीषम ।।

2 3 2 3 2 1 20 3 1 20 3 2
1493. त्वम् - दाता - प्रथमः - राधसाम् -असि । असि - सत्यः
3 2 3 2 3 1 2 3 1 2
- ईशानकृत् - ईशान - कृत् । तुविद्युम्नस्य-तुवि-द्युम्नस्य
1 2 0 3 1 2 3 1 2 0 1 20 3 2
-युज्या-आ-वृणीमहे । पुत्रस्य-पुत्-त्रस्य-शवसः-महः ।।
आ-12,अ-6,प-40,ब-वि-4-2

3 2 3 1 2 3 2 3 2 0* 3 2 3 2
1494. प्रत्नम् -पीयूषम्- पूर्व्यम् - यत् -उक्थ्यम् । महः -गाहात्
3 2 3 1 2 0 3 2 1 20
- दिवः - आ- निः - अधुक्षत । इन्द्रम् -अभि-जायमानम्
3
- सम् - अस्वरन् ।।

2 3 2 3 1 2 0 1 20 3 1 2
1495.आत्- ईम्- के- चित् -पश्यमानासः -आप्यम् । वसुरुचः
3 1 2 0 3 2 3 2 3 3 2 1 20
- वसु-रुचः -दिव्याः -अभि-अनूषत । दिवः- न -वारम्
3 2 3
- सविता - वि - ऊर्णुते ।।

1 20 3 1 2 3 1 20 3 1 2 3 2 3
1496. अध- यत्- इमेइति - पवमान - रोदसीइति । इमा - च
1 2 0 1 20 3 2 3 1 2 3 2 3 2 3
विश्वा - भुवना -अभि - मज्मना । यूथे- न - निष्ठाः-नि
2 3 2 3
- स्थाः - वृषभः - वि - राजसि ।।
आ-10,अ-2,प-53,फि-वि-12,ढा-3

3 2 3 2 3 1 2 3 2 3 2
1497. इमम् - उ - सु - त्वम् - अस्माकम् । सनिम् - गायत्रम्
1 2 0 1 20 3 1 2 3
- नव्याँसम् । अग्ने - देवेषु - प्र - वोचः ।।

3 2 3 2 3
1498.विभक्ता- वि- भक्ता -असि- चित्रभानो - चित्र - भानो।

1 2 0 3 2 3 2 3 2 3 2 3 1 2 3
सिन्धोः-ऊर्मौ-उपाके-आ।सद्यः-स-द्यः-दाशुषे-क्षरसि।

2 3 1 2 1 20 3 1 2
1499.आ - नः - भज - परमेषु । आ - वाजेषु - मध्यमेषु ।

1 20 1 2 0 1 20
शिक्ष - वस्वः - अन्तमस्य।। आ-7,अ-3,प-38,बू-वि-5-4

3 2 3 2 120 3 2 3 1 2 3 1 2
1500.अहम् - इत् - हि - पितुः - परि। मेधाम् - ऋतस्य-जग्रह।

3 2 1 20 3
अहम् - सूर्यः - इव -अजनि ।।

3 2 3 1 2 1 20 1 20 3 2
1501.अहम् - प्रत्नेन - जन्मना । गिरः - शुम्भामि-कण्ववत्।

1 20 1 2 0 1 20 3 2
येन - इन्द्रः - शुष्मम् - इत् - दधे ।।

2 3 2 3 2 1 20 2 3 2
1502.ये - त्वाम् - इन्द्र- न - तुष्टुवुः । ऋषयः - ये - च-तुष्टुवुः।

1 20 3 1 20 2 3
मम - इत् - वर्धस्व - सुष्टुतः - सु - स्तुतः ।।

आ-9,अ-1,प-38,टू-वि-7-5

इति प्रथमः खण्डः।। 1।।

1 20 1 20 3 1 2 1 20 120 3
1503.अग्ने - विश्वेभिः-अग्निभिः। जोषि-ब्रह्म-सहस्कृत-सहः

2 3 2 3 1 2 1 2 0 3 1 20
- कृत। ये - देवत्रा-ये-आयुषु। तेभिः- नः-महय-गिरः।।

2 1 20 3 1 2 3 2 1 20
1504. प्र - सः - विश्वेभिः - अग्निभिः । अग्निः - सः - यस्य

3 1 2 120 3 2 3 2 3 2 1 20
- वाजिनः। तनये - तोके -अस्मत्-आ। सम्यङ् - वाजैः

1 20 1 20 3
- परीवृतः - परि - वृतः ।।

2 3 3 1 2 1 20 3 2 3
1505.त्वम् - नः - अग्ने - अग्निभिः। ब्रह्म -यज्ञम् - च -वर्द्धय।
2 3 1 2 3 2 1 20 3
त्वम् - नः - देवतातये। रायः - दानाय - चोदय ।।
आ-14,अ-2,प-47,थे-वि-19,फो-6

1 2 3 2 3 1 2 3 2 3
1506. त्वेइति - सोम - प्रथमाः - वृक्तबर्हिषः - वृक्त - बर्हिषः ।
2 1 20 1 20 1 20 3 2 3
महे -वाजाय- श्रवसे - धियम्- दधुः। सः-त्वम्- नः-वीर
20* 3
- वीर्याय - चोदय।।

3 20* 3 2 3 2 1 20 3 1 2 1 20
1507.अभ्यभि-अभि-अभि-हि-श्रवसा- ततर्दिथ। उत्सम्-उत्
3 2 3 1 2 3 1 20 1 20
-सम्- न -कम्-चित्-जनपानम्-जन-पानम् - अक्षितम्
3 1 20 1 20 1 20
- अ - क्षितम् । शर्याभिः - न - भरमाणः - गभस्त्योः ।।

1 20 3 1 20 3 1 2
1508. अजीजनः - अमृत - अ - मृत- मर्त्याय- कम् । ऋतस्य-
1 20 3 1 2 3 1 20 1 20 1 20 3
धर्मन्-अमृतस्य - अ - मृतस्य - चारुणः । सदा - असरः
1 20 1 20 1 20
-वाजम् - अच्छ - सनिष्यदत् ।।
आ-19,अ-7,प-56,थू-वि-12-7

2 1 20 1 20 3 1 20 3 2 1 20
1509.आ- इन्दुम् - इन्द्राय- सिञ्चत। पिबाति - सोम्यम्-मधु।
1 20 3 2
प्र - राधाँसि - चोदयते - महित्वना ।।

1 20 3 1 20 1 20 1 20 3 1 2 3
1510.उप - उ - हरीणाम् - पतिम् । राधः -पृञ्चन्तम्-अब्रवम्।
2 3 2 3 1 2
नूनम् - श्रुधि - स्तुवतः - अश्व्यस्य ।।

2 32 32 3 2 32 312

1511. न - हि - अङ्ग - पुरा - च - न। जज्ञे - वीरतरः - त्वत्।

3 2 312 312

न - किः - राया - न - एवथा - न - भन्दना ।।

आ-9,अ-ना,प-38,ले-वि-4-8

32 3 120 32 120 120

1512.नदम्- वः -ओदतीनाम्- नदम् - योयुवतीनाम् - पतिम्

3 120 3 2 3

- वः - अघ्न्यानाम्- अ- घ्न्यानाम्-धेनूनाम्-इषुध्यसि।।

आ-4,अ-1,प-12,ता-वि-2,झा-9

इति द्वितीयः खण्डः।।2।।

32 3 2 3 2 32 3

1513. देवः - वः - द्रविणोदाः - द्रविणः - दाः। पूर्णाम्-विवष्टु

12 3 120 3 12 120 3

-आसिचम् - आ - सिचम् । उत्- वा -सिञ्चध्वम्-उप-वा

2 3 2 3

-पृणध्वम् । आत् - इत् - वः - देवः - ओहते।।

2 120 3 12 120 3

1514.तम् - होतारम् - अध्वरस्य - प्रचेतसम् - प्र - चेतसम् ।

120 32 3 120 120 32

वह्निम् - देवाः - अकृण्वत । दधाति - रत्नम् - विधते

312 3 120 32 120 312

- सुवीर्यम् - सु - वीर्यम् । अग्निः - जनाय - दाशुषे ।।

आ-9,अ-4,प-39,छै-वि-2-10

120 3 12 3 120 120 312

1515.अदर्शि -गातुवित्तमः -गातु- वित्तमः। यस्मिन् - व्रतानि

3 2 3 2 120 3 2 32 120 120

-आदधुः-आ-दधुः। उप-उ-सु-जातम्-आर्यस्य-वर्धनम्।

32 3 120

अग्निम् - नक्षन्तु - नः - गिरः।।

1 2 0 120 3 1 2 3 1 2 3 2
1516.यस्मात् - रेजन्त - कृष्टयः - चर्कृत्यानि - कृण्वतः ।
3 2 3 2 3 1 2 3 2 3
सहस्रसाम् - सहस्र - साम् - मेधसातौ- मेध- सातौ-इव
1 20 3 2 3 2 3
- त्मना । अग्निम् - धीभिः - नमस्यत ।।

2 1 20 1 20 3 2 3 2 1 2 0
1517. प्र- दैवोदासः - दैवः -दासः - अग्निः । देवः - इन्द्रः - न
3 1 2 1 20 3 1 2 3 2 3
- मज्मना । अनु - मातरम् - पृथिवीम् - वि - वावृते।
2 1 20 1 20
तस्थौ-नाकस्य-शर्मणि।। आ-16,अ-5,प-52,टू-वि-3-11

1 20 1 20 3 2 3 1 20 120 3
1518.अग्ने-आयूँषि- पवसे। आ-सुव -ऊर्जम्- इषम्- च- नः।
2 3 1 2
आरे- बाधस्व - दुच्छुनाम् ।।

3 2 1 2 0 120 1 20 1 20 3
1519.अग्निः - ऋषिः - पवमानः । पाञ्चजन्यः- पाञ्च- जन्यः-
3 1 2 3 2 3 3 2 3 2
पुरोहितः-पुरः-हितः। तम्-ईमहे-महागयम्-महा-गयम्।।

1 20 120 1 2 0 3 1 2 0 3 1 2 1 2 0
1520.अग्ने - पवस्व - स्वपाः - सु -अपाः । अस्मेइति - वर्चः -
3 1 2 3 1 20 120 3 2 1 20 1 20
सुवीर्यम् - सु - वीर्यम् । दधत् - रयिम् - मयि - पोषम् ।।
आ-17,अ-5,प-40,णै-वि-11,ज-12

1 20 3 1 2 3 1 2 3 1 2
1521.अग्ने - पावक - रोचिषा । मन्द्रया - देव - जिह्वया ।
3 2 3 1 2 0 3
आ - देवान् - वक्षि - यक्षि - च ।।

2 3 1 20 1 20
1522.तम्- त्वा - घृतस्नो- घृत- स्नो- ईमहे। चित्रभानो-चित्र

3 1 2 3 1 2 0 3 2 3 1 2 3
-भानो- स्वर्दृशम्- स्वः-दृशम्। देवान्-आ-वीतये-वह।।

3 1 2 3 2 3 1 2
1523. वीतिहोत्रम्-वीति - होत्रम्- त्वा-कवे । ुमन्तम् - सम्

3 1 2 0 3 1 2 3 2
- इधीमहि । अग्ने - बृहन्तम् - अध्वरे ।।

आ-6,अ-4,प-38,भि-वि-1-13

इति तृतीयखण्डः।।3।।

1 2 0 3 1 2 3 1 2 1 2 0
1524.अव - नः - अग्ने - ऊतिभिः । गायत्रस्य - प्रभर्मणि - प्र

3 1 2 0 3 2 3
- भर्मणि । विश्वासु - धीषु - वन्द्य ।।

2 3 2 3 1 2 3 1 2 0
1525.आ- नः -अग्ने - रयिम् - भर। सत्रासाहम्- सत्रा-साहम्

1 2 0 1 2 0 3 2 3 1 2 3 1 2 0
- वरेण्यम् । विश्वासु - पृत्सु - दुष्टरम् - दुः - तरम्।।

2 3 1 2 3 1 2 3 2
1526.आ - नः - अग्ने - सुचेतुना - सु - चेतना । रयिम्

3 1 2 3 1 2 3 2
- विश्वायुपोषसम् - विश्वायु - पोषसम् - मार्डीकम्

3 1 2
- धेहि - जीवसे।। आ-7,अ-5,प-38,ज्ञै-वि-5-14

3 2 3 1 2 0 1 2 0 3 2 3
1527. अग्निम् - हिन्वन्तु - नः - धियः । सप्तिम् -आशुम्-इव

1 2 1 2 0 3 1 2 0 1 2 0 3
- आजिषु । तेन - जेष्म - धनन्धनम् - धनम् - धनम्।।

1 2 0 3 1 2 3 1 2 0 1 2 0 3 1 2 0
1528. यया-गाः-आकरामहै-आ-करामहै। सेनया-अग्ने-तव

3 2 3 1 2
- ऊत्या । ताम् - नः - हिन्वा - मघत्तये ।।

2 3 2 3 2 3 2 1 20
1529. आ - अग्ने - स्थूरम् - रयिम् - भर । पृथुम् - गोमन्तम्
3 1 2 3 2 3 1 2 3 2
- अश्विनम् । अङ्धि - खम् - वर्तय - पविम् ।।

1 20 1 20 3 1 2 3 1 20 1 20 3
1530. अग्ने-नक्षत्रम्-अजरम्-अ-जरम्। आ - सूर्यम् -रोहयः
2 1 20 1 20 1 20
- दिवि । दधत् - ज्योतिः - जनेभ्यः ।।

1 20 3 2 3 2 3 1 2 0 1 2 0 3 2
1531. अग्ने- केतुः -विशाम् -असि । प्रेष्ठः- श्रेष्ठः-उपस्थसत्
3 2 1 20 3 2 1 20 1 20
- उपस्थ - सत् । बोध - स्तोत्रे - वयः - दधत् ।।

आ-23,अ- 4,प-63,झो-वि-10,ङौ-ग-1-15

3 2 3 2 3 2 3 2 1 2 0 3 2 3 2
1532.अग्निः - मूर्धा - दिवः - ककुत्। पतिः-पृथिव्याः-अयम्।
3 2 120 3
अपाम् - रेताँसि - जिन्वति ।।

1 20 1 20 3 1 2 3 2 0•
1533.ईशिषे - वार्यस्य - हि । दात्रस्य - अग्ने - स्वःपतिः ।
0• 1 2 3 2 3 1 20 1 20
स्वऽ3रिति-पतिः । स्तोता - स्याम् - तव - शर्मणि ।।

2 3 1 20 1 20 3 2 1 20 3
1534.उत् -अग्ने - शुचयः - तव । शुक्राः - भ्राजन्तः - ईरते।
1 20 1 20 3 1 2
तव - ज्योतीँषि - अर्चयः ।।

आ-11,अ-1,प-32,ता-वि-6,ऊ-16

इति चतुर्थः खण्डः ।।4।।

इति सप्तमप्रपाठके प्रथमोऽर्धः ।।

इति चतुर्दशोऽध्यायः ।।14।।

****

# अथ पञ्चदशोऽध्यायः।। 15।।

## अथ सप्तमप्रपाठके द्वितीयोऽर्धः

2 3 2 1 20 1 20 3 20 3 2
1535. कः -ते -जामिः-जनानाम्। अग्ने-कः-दाश्वध्वरः-दाशु
3 2 3 1 20 3 2
-अध्वरः। कः- ह -कस्मिन्-असि-श्रितः।।

2 3 2 1 20 1 20 3 2 3 2 3
1536. त्वम् - जामिः-जनानाम् । अग्ने - मित्रः -मि-त्रः-असि
2 1 20 3 1 20 3 1 20
- प्रियः। सखा-स- खा - सखिभ्यः - स-खिभ्यः ईड्यः।।

1 20 3 2 3 2 1 20 1 20 3 2 3 2
1537.यज - नः -मित्रा-मि-त्रा- वरुणा । यज - देवान् - ऋतम्
3 2 1 20 1 20 1 20
- बृहत्। अग्ने - यक्षि - स्वम् - दमम् ।।

आ-14,अ-5,प- 44,नी-वि-15-1

3 1 2 3 2 3 2 1 20 3 2 3 2
1538. ईडेन्यः- नमस्यः - तिरः- तमाँसि- दर्शतः। सम्-अग्निः
3 1 20
- इध्यते - वृषा।।

1 20 3 2 3 1 20 3 1 2 3
1539. वृषा-उ-अग्निः- सम्- इध्यते। अश्वः-न-देववाहनः-देव
1 20 3 1 2 3
- वाहनः। तम् - हविष्मन्तः - ईडते।।

1 20 3 2 3 1 20 3
1540. वृषणम्- त्वा- वयम् - वृषन्। वृषणः - सम् - इधीमहि।
1 20 1 20 3 2
अग्ने - दीद्यतम् - बृहत् ।। आ-9,अ-1,प-32,ता-वि-11-2

2 3 1 2 3 1 2 3 1 2 3 1 2
1541. उत्- ते- बृहन्तः-अर्चयः। समिधानस्य-सम् - इधानस्य
3 1 20 3 1 2 3
- दीदिवः। अग्ने - शुक्रासः - ईरते।।

120 3 20* 1 20 3 1 2 3 1 20 3 2
1542. उप-त्वा-जुह्वः-मम। घृताचीः-यन्तु-हर्यत। अग्ने-हव्या
3
-जुषस्व-नः।।

3 2 1 20 3 1 2 3 1 2 3 2 3
1543. मन्द्रम्-होतारम्-ऋत्विजम्। चित्रभानुम्-चित्र-भानुम्
3 1 2 3 2 3 2 3 2 3
-विभावसुम्-विभा-वसुम्। अग्निम्-ईडे-सः-उ-श्रवत्।।

3 2 3 1 20 3 2 32 3 1 2 3 2
1544. पाहि-नः-अग्ने-एकया। पाहि-उत-द्वितीयया। पाहि-
3 2 3 1 2 3 2 3 2 3 1 2 3
गीर्भिः-तिसृभिः-ऊर्जाम्-पते। पाहि-चतसृभिः-वसो।।

3 2 1 20 3 1 2 1 20 3 2 3
1545. पाहि-विश्वस्मात्-रक्षसः-अराव्णः-अ-राव्णः। प्र-स्म
1 20 3 2 1 20 3 1 2
-वाजेषु-नः-अव। त्वाम्-इत्-हि-नेदिष्ठम्-देवतातये
3 2 1 20 3 2
-आपिम्-नक्षामहे-वृधे।। आ-11, अ-4, प-70, पो-4, वि-4

इति प्रथमः खण्डः।। 1।।

3 2 3 2 1 20 3 1 20 1 20
1546. इनः-राजन्-अरतिः-समिद्धः-सम्-इद्धः। रौद्रः-दक्षाय
3 2 3 2 3 2 3 2
-सुषुमान्-अदर्शि। चिकित्-वि-भाति-भासा-बृहता।
1 20 3 1 20 3 1 2 3 1 20
असिक्नीम्-एति-रुशतीम्-अपाजन्-अप-अजन्।।

3 2 1 20 3 2 1 20 3 1 2
1547. कृष्णाम्-यत्-एनीम्-अभि-वर्पसा-भूत्। जनयन्
1 20 3 2 3 2 3 2 3 2 1 20
-योषाम्-बृहतः-पितुः-जाम्। ऊर्ध्वम्-भानुम्-सूर्यस्य
3 2 3 2 1 20 3 2 3
-स्तभायन्। दिवः-वसुभिः-अरतिः-वि-भाति।।

3 2 3 1 2 1 20 3 1 20 3 2
1548. भद्रः- भद्रया- सचमानः -आ-अगात्। स्वसारम्-जारः
3 2 3 2 3 2 3 2 1 2 0
-अभि - एति - पश्चात् । सुप्रकेतैः - सु - प्रकेतैः - द्युभिः
3 2 3 1 2 3 1 20 1 20 1 20 3 2
-अग्निः-वितिष्ठन्- वि - तिष्ठन् - रुशद्भिः-वर्णैः-अभि
3 2 3
-रामम्-अस्थात्।। आ-17,अ- 4,प-64,झी-वि-19-5

1 20 3 1 20 3 1 20 1 20
1549. कया-ते-अग्ने-अङ्गिरः। ऊर्जः- नपात् -उपस्तुतिम् -उप
3 1 20 3 3 1 2
-स्तुतिम् । वराय - देव - मन्यवे ।।

1 20 3 1 20 3 1 2 3 2 3
1550.दाशेम- कस्य- मनसा । यज्ञस्य- सहसः-यहो । कत् -उ
3 2 1 20
- वोचे - इदम् - नमः।।

1 20 3 1 20 1 2 0 3 1 2 3 2
1551.अध-त्वम्-हि -नः- करः। विश्वाः -अस्मभ्यम् -सुक्षितीः
3 2 1 20 1 20 3 1 20
- सु - क्षितीः । वाजद्रविणसः- वाज -द्रविणसः-गिरः।।
आ-14,अ-3,प-37,बे-वि-12,धा-6

1 20 3 1 2 1 20 3
1552.अग्ने-आ- याहि -अग्निभिः। होतारम्- त्वा - वृणीमहे।
2 3 1 20 3 1 2 1 20
आ-त्वाम्-अनक्तु-प्रयता-प्र-यता-हविष्मती। यजिष्ठम्
3 2 3 1 2 3 1 20
- बर्हिः - आसदे - आ - सदे ।।

1 2 0 3 1 20 1 20
1553. अच्छ - हि - त्वा-सहसः - सूनो-अङ्गिरः। स्रुचः-चरन्ति
3 2 3 2 1 20 3 1 2 3 2 3
-अध्वरे। ऊर्जः-नपातम्- घृतकेशम्-घृत-केशम्-ईमहे।

2 3 1 2 3 2
अग्निम् - यज्ञेषु - पूर्व्यम् ।। आ-9,अ-3,प-37,डी-वि-17

1 2 0 3 1 2 3 2 3 1 20
1554. अच्छ - नः - शीरशोचिषम् - शीर - शोचिषम् । गिरः

3 2 1 2 0 3 1 2 1 20 3 1 2 3
- यन्तु- दर्शतम्-अच्छ -यज्ञासः- नमसा-पुरुवसुम्-पुरु

1 20 3 2 3 2 3 1 2
- वसुम् । पुरुप्रशस्तम् - पुरु - प्रशस्तम् - ऊतये ।।

3 2 3 2 1 20 3 1 2 3 2 3
1555. अग्निम् -सूनुम् - सहसः - जातवेदसम् -जात- वेदसम्

1 2 1 2 0 3 2 3 1 2 3 1 20
- दानाय-वार्याणाम्। द्विता - यः -भूत्-अमृतः-अ-मृतः

1 2 0 1 2 0 3 1 2 3 2
- मर्त्येषु - आ - होता - मन्द्रतमः - विशि।।

आ-10,अ-5,प-37,मे-वि-8-2

इति द्वितीयः खण्डः।।2।।

1 2 0 3 2 3 2 3 2
1556. अदाभ्यः-अ - दाभ्यः - पुरएता - पुरः - एता । विशाम्

3 2 1 20 1 2 0 1 2 0 1 2 0 1 2 0
- अग्निः - मानुषीणाम् - तूर्णीः - रथः - सदा - नवः ।।

3 2 1 2 0 1 20 3 2 3 1 2 0
1557.अभि - प्रयाँसि - वाहसा । दाश्वान् - अश्नोति - मर्त्यः ।

1 20 3 1 2 3 2 3
क्षयम् - पावकशोचिषः - पावक - शोचिषः।।

3 2 1 2 0 3 1 2 3 1 2 0 1 2 0
1558. साह्वान् - विश्वाः - अभियुजः - अभि - युजः । क्रतुः

3 1 2 1 20 3 2 3 1 2
- देवानाम्-अमृक्तः - अ - मृक्तः। अग्निः -तुविश्रवस्तमः

3 2 3
- तुवि - श्रवस्तमः।।

आ-13,अ-6,प-37,ते-वि-19,गो-9

3 2 3 2 1 20 3 3 2 3 2
1559. भद्रः - नः - अग्निः - आहुतः - आ - हुतः । भद्रा-रातिः
3 2 3 2 3 2 32 120
-सुभग-सु- भग- भद्रः-अध्वरः। भद्राः-उत-प्रशस्तयः-प्र
3
- शस्तयः।।

3 2 120 3 1 2 3 120 120 3 1 2
1560. भद्रम् - मनः - कृणुष्व - वृत्रतूर्ये-वृत्र-तूर्ये। येन-समत्सु
3 1 2 0 3 2 1 20 3 2 3 1 20 1 20
-स-मत्सु- सासहिः। अव-स्थिरा-तनुहि-भूरि-शर्द्धताम्
3 1 2 3 1 2
- वनेम - ते - अभिष्टये।। आ-9,अ-5,प-37,छो-वि-2-10

1 20 1 20 1 20 1 2 0 3
1561. अग्ने - वाजस्य - गोमतः । ईशानः - सहसः - यहो ।
1 2 3 1 20 1 20
अस्मेइति - देहि ।जातवेदः - जात - वेदः-महि-श्रवः।।

2 3 2 1 2 0 3 2 3 2 3 1 2 3 2 3 2
1562. सः-इधानः-वसुः-कविः। अग्निः- ईडेन्यः- गिरा । रेवत्
3 1 2 3 3
- अस्मभ्यम् - पुर्वणीक - पुरु - अनीक - दीदिहि।।

3 2 3 2 1 20 1 2 0 1 2 0 3 2 3 1 2
1563. क्षपः- राजन्- उत- त्मना ।अग्ने -वस्तोः - उत -उषसः।
3 1 2 3 1 20
सः - तिग्मजम्भ - तिग्म - जम्भ - रक्षसः - दह - प्रति ।।
आ-11,अ-3,प-41,फै-वि-11-11

इति तृतीयः खण्डः।। 3।।

3 1 2 3 2 3 1 20 3 1 2
1564. विशोविशः-विशः - विशः- वः -अतिथिम्। वाजयन्तः
3 2 3 2 3 2 3 120 3
- पुरुप्रियम्- पुरु - प्रियम्। अग्निम्- वः -दुर्यम्-दुः-यम्
1 2 0 3 2 3 1 2 1 20
- वचः - स्तुषे- शूषस्य - मन्मभिः ।।

2 120 3 1 2 3 2 3 2
1565. यम् - जनासः - हविष्मन्तः । मित्रम् - मि - त्रम् - न -
3 1 2 3 2 3 1 2 3 120
सर्पिरासुतिम्-सर्पिः-आसुतिम्। प्रशँसन्ति-प्र-शँसन्ति
120 3
- प्रशस्तिभिः - प्र - शस्तिभिः।।

1 2 0 3 1 2 3 2 3 2 3 1 2
1566. पन्याँसम् -जातवेदसम्-जात- वेदसम् । यः- देवताति
120 3 1 2 120 3 2
- उद्यता - उत् - यता । हव्यानि - ऐरयत् - दिवि।।

आ-10,अ-8,प-46,कै-वि-6,चू-12

1 2 0 3 2 3 1 2 3 1 2 0
1567. समिद्धम् -सम् - इद्धम्- अग्निम्- समिधा- सम् - इधा
3 2 3 1 2 0 3 2 3 2 3 2 3 2
- गिरा- गृणे। शुचिम् - पावकम् - पुरः -अध्वरे - ध्रुवम्।
1 20 3 1 20 3 1 2 3 1 20
विप्रम् - वि - प्रम् - होतारम् - पुरुवारम् - पुरु - वारम्
3 1 2 3 1 20 3 2 3 2 3 1 2
-अद्रुहम् - अ -द्रुहम्। कविम्-सुम्नैः-ईमहे-जातवेदसम्
3 2 3
- जात - वेदसम् ।।

2 3 2 3 1 2 3 1 20 3 1 2 3 2
1568. त्वाम् - दूतम् - अग्ने -अमृतम्- अ-मृतम्- युगेयुगे-युगे
3 1 2 3 1 20 3 2 1 2 0
-युगे। हव्यवाहम्-हव्य-वाहम्-दधिरे-पायुम् - ईड्यम्।
3 1 2 3 1 20 3 1 20 3 2 3 2
देवासः - च - मर्तासः - च -जागृविम्। विभुम्-वि-भुम्
3 1 2 120 3
-विश्पतिम् - नमसा - नि - सेदिरे।।

3 1 2 3 1 20 3 1 2 1 20 3 2 3 2
1569. विभूषन्- वि- भूषन्-अग्ने-उभयान्-अनु- व्रता । दूतः

3 1 2 120 3 1 2 3 2 3 2
- देवानाम् -रजसीइति- सम् - ईयसे । यत् - ते - धीतिम्

3 2 3 2 3 1 2 3 1 2 1 20
-सुमतिम्- सु- मतिम् -आवृणीमहे - आ-वृणीमहे - अध

3 1 2 3 1 20 3 2 3
-स्म - नः - त्रिवरूथः - त्रि -वरूथः - शिवः - भव।।

आ-18,अ-14,प-86,द्रू-वि-9-13

1 20 3 1 2 1 20 1 20 3 1 2 3
1570. उप- त्वा -जामयः - गिरः ।देदिशतीः-हविष्कृतः-हविः

1 20 3 2 1 20 3
- कृतः । वायोः - अनीके -अस्थिरन्।।

1 2 0 3 1 2 3 1 20 1 20 3
1571. यस्य - त्रिधातु - त्रि - धातु - अवृतम् - अ - वृतम् ।

2 3 2 1 20 3 1 20 3
बर्हिः - तस्थौ -असन्दिनम् -अ-सन्दिनम्। आपः-चित्

2 3 2
-नि - दध - पदम् ।।

3 2 3 1 2 3 1 2 1 20
1572. पदम् - देवस्य - मीढुषः । अनाधृष्टाभिः - अन् -

3 1 2 3 2 1 20 3 2 3
आधृष्टाभिः -ऊतिभिः । भद्रा-सूर्यः - इव-उपदृक् - उप

2
- दृक्।।

आ-12,अ-6,प- 41,ज्ञौ-वि-7-ले-14

इति चतुर्थः खण्डः।।4।।

इति सप्तमप्रपाठके द्वितीयोऽर्धः।।

इति पञ्चदशोऽध्यायः।।15।।

****

# अथ षोडशोऽध्यायः।। 16।।

## अथ सप्तमप्रपाठके तृतीयोऽर्धः।।

3 2 3 1 2 3 2 3 120 1 20
1573. अभि - त्वा - पूर्वपीतये - पूर्व - पीतये। इन्द्र -स्तोमेभिः
3 1 2 3 1 2 3 1 2 3 1 2
-आयवः । समीचीनासः - सम् - ईचीनासः - ऋभवः
3 120 3 2 3 2
-ऋ - भवः - सम् - अस्वरन् । द्राः - गृणन्त -पूर्व्यम्।।

3 2 120 3 1 2 0 1 20 120 3 1 2
1574. अस्य- इत्- इन्द्रः- वावृधे- वृष्ण्यम्- शवः। मदे-सुतस्य
1 20 3 2 3 2 3 1 2 3 1 2
-विष्णवि। अद्य-अ-द्य-तम्-अस्य-महिमानम्-आयवः।
1 20 3 1 2
अनु -स्तुवन्ति-पूर्वथा।। आ-9,अ-4,प-38,प्यू-वि-3,ग-1-1

2 3 1 2 3 1 2 3 1 20
1575. प्र- वाम् -अर्चन्ति-उक्थिनः। नीथाविदः- नीथ - विदः
3 1 2 1 2 0 120 3 1 2 120 3
-जरितारः। इन्द्राग्नी-इन्द्र-अग्नीइति-इषः- आ- वृणे।।

1 2 0 120 3 1 2 3 2 120 3 1 2
1576. इन्द्राग्नी - इन्द्र -अग्नीइति -नवतिम्-पुरः- दासपत्नीः
3 2 3 2 1 20 1 20
-दास-पत्नीः-अधूनुतम् । साकम् - एकेन - कर्मणा ।।

1 2 0 120 3 1 2 1 20 120 120 3
1577. इन्द्राग्नी - इन्द्र -अग्नीइति-अपसः-परि। उप-प्र-यन्ति
1 2 3 1 2 3 2 0* 1 20
- धीतयः । ऋतस्य - पथ्याः - अनु।।

1 2 0 120 3 1 2 3 1 2 3
1578. इन्द्राग्नी - इन्द्र - अग्नीइति - तविषाणि - वाम्।
1 2 3 2 3 1 2 0 3 3 2 3 1 2
सधस्थानि - सध- स्थानि- प्रयाँसि-च। युवोः- अप्तूर्यम्
3 120 3 2
-अप्-तूर्यम्-हितम्।। आ-19,अ-8,प-53,दि-वि-12-2

3 2 3 2 3 120 1 20
1579. शग्धि - उ -सु- शचीपते -शची - पते । इन्द्र - विश्वाभिः
3 1 2 1 20 3 1 2 3 1 2
- ऊतिभिः । भगम्- न -हि - त्वा - यशसम् - वसुविदम्
3 1 20 1 20 3 1 20
-वसु - विदम्। अनु - शूर - चरामसि ।

3 2 1 20 3 2 3 2 1 20 3
1580. पौरः - अश्वस्य - पुरुकृत् - पुरु - कृत् - गवाम् - असि ।
1 2 0 3 1 2 3 2 1 20
उत्सः - उत् - सः - देव - हिरण्ययः। न - किः -हि-दानम्
3 1 2 3 1 2 0 1 2 1 20 3
-परिमर्द्धिषत्। परि-मर्द्धिषत्-त्वेइति । यद्यत्- यत्-यत्
1 20 3
- यामि- तत्-आ-भर।। आ-13,अ- 6,प-47,झे-वि-5,ठु-3

2 3 1 20 3 2 1 20 1 20
1581.त्वम् - हि - आ - इहि - चेरवे । विदाः - भगम्-वसुतये।
3 1 20 3 2 3
उत्-वावृषस्व-मघवन् - गविष्टये- गो-इष्टये। उत्-इन्द्र
1 20 1 20 3
- अश्वमिष्टये - अश्वम् - इष्टये ।।

2 3 2 3 1 2 3 1 2 3 2 3 1 2 3
1582. त्वम्-पुरु-सहस्राणि-शतानि-च। यूथा-दानाय-मँहसे।
2 3 2 3 2 1 20 1 20
आ- पुरन्दरम्- पुरम् - दरम् -चकृम - विप्रवचसः-विप्र
3 1 20 1 20 1 20
- वचसः । इन्द्रम् - गायन्तः - अवसे ।।
आ-11,अ-4,प-38,फो-वि-3- 4

2 1 20 120 1 20 1 20 3 2 1 20 1 20
1583. यः- विश्वा-दयते-वसु । होता- मन्द्रः-जनानाम्। मधोः
1 20 3 1 2 3 2 1 20 3 1 2
-न-पात्रा-प्रथमानि- अस्मै। प्र-स्तोमाः-यन्तु-अग्नये।।

1 20 3 2 320* 3 1 2 3 1 20
1584. अश्वम् - न - गीर्भिः - रथ्यम् - सुदानवः - सु - दानवः -
3 1 2 3 1 2 3 1 2 3 1 2 1 20 3
मर्मृज्यन्ते- देवयवः - उभेइति - तोकेइति - तनये -दस्म
1 20 1 20 3 1 2
- विश्पते - पर्षि - राधः - मघोनाम् ।।

आ-13,अ-1,प-33,टी-वि-4,ग-1-5

इति प्रथमः खण्डः ।।1।।

3 2 3 1 20 3 2 3 2 3
1585. इमम्- मे - वरुण-श्रुधि- हवम्। अद्य-अ-द्य - च-मृडय।
2 3 2 3
त्वाम् - अवस्युः - आ - चके ।।

आ-1,अ-1,प-14,की-वि-1,ढ-6

1 20 3 2 3 2 3
1586. कया - त्वम् - नः - ऊत्या । अभि - प्र - मन्दसे - वृषन्।
1 20 3 1 2 3
कया - स्तोतृभ्यः - आ - भर ।।

आ-2,अ-ना,प-12,या-वि-2-7

120 3 1 2 1 20 3 2 3 2 3 2
1587. इन्द्रम्-इत्-देवतातये। इन्द्रम्-प्रयति-प्र-यति- अध्वरे।
1 20 3 2 3 2 3 1 2 3 1 20
इन्द्रम्-समीके - सम्- ईके - वनिनः - हवामहे । इन्द्रम्
1 20 3 1 2
- धनस्य - सातये ।।

1 20 3 2 1 20 3 1 2 3 1 20 1 20 1 20
1588. इन्द्रः- मह्ना- रोदसीइति- पप्रथत्- शवः। इन्द्रः - सूर्यम्
3 1 20 3 1 20 1 20 3 1 20
-अरोचयत्। इन्द्रे- ह - विश्वा - भुवनानि - येमिरे। इन्द्रे
3 1 2 1 20
-स्वानासः - इन्दवः।। आ-15,अ-2,प-33,वू-वि-5-8

1 20 1 20 3 1 2 3 2 3 2
1589. विश्वकर्मन् - विश्व- कर्मन्। हविषा-वावृधानः-स्वयम्
3 3 20* 3 1 20 3 2 3 2
-यजस्व- तन्वम् - स्व - हि - ते-मुह्यन्तु -अन्ये - अन् - ये
3 1 2 1 20 3 2 3 1 2 3 1 2 3 2 3
-अभितः-जनासः-इह-अस्माकम्-मघवा-सूरिः-अस्तु।
आ-4,अ-2,प-22,था-वि- 4,त्री-9

3 2 3 2 1 20 3 2 1 20 1 20 3
1590. अया-रुचा-हरिण्या -पुनानः। विश्वा - द्वेषाँसि - तरति
1 2 3 1 20 1 20 3 1 2 3
- सयुग्वभिः - स - युग्वभिः । सूरः- न - सयुग्वभिः-स
1 20 1 20 3 1 2 3 2 3 2
- युग्वभिः । धारा - पृष्ठस्य - रोचते । पुनानः - अरुषः
1 20 1 20 3 2 3 1 2 3 1 20
- हरिः । विश्वा - यत् - रूपा - परियासि - परि - यासि
1 20 3 1 2 3 2 3 1 20
-ऋक्वभिः। सप्तास्येभिः-सप्त-आस्येभिः-ऋक्वभिः।।

1 20 1 20 3 1 2 3 1 20 3 1 20
1591.प्राचीम् - अनु - प्रदिशम् - प्र -दिशम्-याति-चेकितत्।
3 1 2 3 2 1 20 1 20 3 2 1 20
सम्-रश्मिभिः-यतते-दर्शतः-रथः। दैव्यः-दर्शतः- रथः।
1 20 3 1 2 1 20 1 20 1 20 3
अग्मन् - उक्थानि - पौँस्या । इन्द्रम् - जैत्राय - हर्षयन्।
1 20 3 2 1 20 1 20 3
वज्रः - च - यत्- भवथः -अनपच्युता -अन् -अपच्युता।
1 2 3 1 20 1 20 3
समत्सु - स - मत्सु - अनपच्युता - अन् - अपच्युता ।।

2 3 2 3 2 3 1 20 3 1 2
1592. त्वम् - ह - त्यत्-पणीनाम् -विदः - वसु । सम्-मातृभिः
3 2 1 20 3 1 2 3 1 2 1 20
- मर्जयसि - स्वे - आ - दमे। ऋतस्य - धीतिभिः - दमे ।

3 1 2 1 20 1 20 1 20 3 1 2
परावतः - न - साम - तत् । यत्र - रणन्ति - धीतयः ।
3 1 2 3 1 20 1 20 1 20 3
त्रिधातृभिः - त्रि - धातृभिः - अरुषीभिः - वयः - दधे।
1 20 1 20 3
रोचमानः - वयः - दधे।।

आ-39,अ-9,प-97,ञु-वि-19-10

इति द्वितीयः खण्डः ।।2।।

3 2 3 1 2 3 1 20 1 20 3 2
1593. उत - नः - गोषणिम् - गो - सनिम् - धियम् । अश्वसाम्
3 2 3 2 3 2 3 2 3 2 3
-अश्व- साम्- वाजसाम्-वाज-साम्-उत। नृवत् -कृणुहि
1 2
-ऊतये ।। आ-2,अ-3,प-16,जू-वि-1-11

3 1 2 3 1 20 3
1594. शशमानस्य- वा - नरः । स्वेदस्य - सत्यशवसः - सत्य
3 2 1 20 1 20
- शवसः । विद - कामस्य - वेनतः।।

आ-3,अ-1,प-10,टौ-वि- 4,ती-12

120 3 1 2 1 20 3 1 2 3 1 2 3 1 20
1595. उप- नः - सूनवः-गिरः । श्रृण्वन्तु -अमृतस्य-अ-मृतस्य
3 2 3 2 3
- ये । सुमृडीकाः - सु - मृडीकाः - भवन्तु - नः।।

आ-3,अ-2,प-14,ठी-वि-6-13

2 3 1 20 301 2 3 2 1 20 1 20
1596. प्र - वाम् - महि - द्यवीइति -अभि । उपस्तुतिम् - उप -
3 2 301 2 1 20 1 20 3
स्तुतिम्-भरामहे।शुचीइति-उप-प्रशस्तये-प्र-शस्तये।।

3 1 2 3 20* 3 2 1 20 1 20 3
1597. पुनानेइति - तन्वा - मिथः । स्वेन - दक्षेण - राजथः ।
2 3 1 2 3 2 3 2
ऊह्याथेइति - सनात् - ऋतम् ।।

3 1 2 3 1 2 3 1 2 0 3 1 20 3 1 2
1598. महीइति - मित्रस्य - मि - त्रस्य - साधथः । तरन्तीइति
1 20 3 1 2 3 2 1 20 3 2 3
- पिप्रतीइति - ऋतम् । परि - यज्ञम् - नि - सेदथुः ।।
आ-11,अ-3,प-35,ड्रु-वि- 4-14

3 2 3 2 3 1 2 3 2 3
1599. अयम्-उ -ते-सम्-अतसि । कपोतः-इव-गर्भधिम्-गर्भ
2 1 2 0 3
- धिम् । वचः - तत् - चित् - नः - ओहसे ।।

3 2 3 1 2 0 3 1 2 0 3
1600. स्तोत्रम् - राधानाम् - पते । गिर्वाहः - वीर - यस्य - ते
1 20 3 1 2 3 1 20
- विभूतिः - वि - भूतिः - अस्तु - सूनृता - सू - नृता ।।

3 2 3 1 2 3 2 1 20 3
1601. ऊर्ध्वः - तिष्ठ - नः - ऊतये । अस्मिन् - वाजे -शतक्रतो
2 3 1 2 3 1 20 3
- शत - क्रतो । सम् - अन्येषु - अन् - येषु - ब्रवावहै ।।
आ-7,अ-5,प-43,धै-वि-5,घु-15

1 20 1 20 3 2 3 1 2 3 1 2 3 1 2
1602. गावः - उप - वद - अवटे । महीइति - यज्ञस्य - रप्सुदा
3 2 3 2 1 2 0 3 1 2
- रप्सु - दा । उभा - कर्णा - हिरण्यया ।।

3 1 2 3 1 20 1 20 3
1603. अभ्यारम् - अभि - आरम् - इत् - अद्रयः - अ - द्रयः ।
1 20 3 1 2 0 1 20 3 1 2
निषिक्तम् - नि - सिक्तम् - पुष्करे - मधु । अवटस्य
3 1 2 3 1 20
-विसर्जने - वि - सर्जने ।।

3 1 2 1 20 3 2 3 1 2 3 2 3
1604. सिञ्चन्ति- नमसा -अवटम् । उच्चाचक्रम्- उच्चा -चक्रम्
1 20 1 20 3 1 2 3 1 2
-परिज्मानम् - परि- ज्मानम् । नीचीनवारम् - नीचीन

3 1 2 0 3
- वारम् -अक्षितम् - अ - क्षितम् ।।

आ-13,अ-8,प- 43,ब-वि-2-16

इति तृतीयः खण्डः ।।3।।

2 3 2 3 1 2 3 2 3 2 120
1605. मा - भेम- मा - श्रमिष्म । उग्रस्य - सख्ये - स - ख्ये-तव

3 2 3 1 2 0 3 1 2 3 1 2 0 3 2
-महत्- ते - वृष्णः -अभिचक्ष्यम्-अभि-चक्ष्यम्-कृतम्।

1 2 0 3 1 2 1 20
पश्येम - तुर्वशम् - यदुम् ।।

3 2 1 20 3 20॰ 3 1 2 0 3 2 3
1606. सव्याम्-अनु - स्फिग्यम् -वावसे-वृषा। न-दानः-अस्य

1 2 0 1 20 3 1 2 3 1 2
- रोषति। मध्वा-संपृक्ताः-सम्-पृक्ताः-सारघेण-धेनवः।

1 20 3 1 20 1 20
तूयम् - आ - इहि - द्रव - पिब ।।

आ-12,अ-3,प-39,जो-वि-5-17

3 2 3 1 20 3 2
1607. इमाः - उ - त्वा - पुरूवसो-पुरु-वसो। गिरः-वर्धन्तु-याः

1 20 3 1 2 3 2 3 1 20 3 1 2
- मम-पावकवर्णाः-पावक-वर्णाः- शुचयः - विपश्चितः

3 1 20 3 2 1 20 3
- विपः- चितः । अभि - स्तोमैः - अनूषत ।।

3 2 3 1 2 1 20 1 20 1 20 3
1608. अयम् - सहस्रम् - ऋषिभिः - सहस्कृतः - सहः - कृतः।

2 3 2 3 2 3 2 3 2
समुद्रः-सम्-उद्रः-इव-पप्रथे। सत्यः-सः-अस्य- महिमा

3 1 20 3 1 2 3 1 2 3 1 2 0
- गृणे - शवः । यज्ञेषु - विप्रराज्ये - विप्र - राज्ये ।।

आ-10,अ-6,प-41,ब-वि-9,ज्ञो-18

1 2 0 3 2 1 2 0 1 2 0 1 2 0 3 2 3
1609. यस्य- अयम्-विश्वः-आर्यः। दासः- शेवधिपाः- शेवधि
2 3 2 3 2 3 2 3 1 2 1 2 0
-पाः - अरिः - तिरः - चित् - अर्ये - रुशमे - पवीरवि।
1 2 0 3 2
तुभ्य - इत् - सः - अज्यते - रयिः ॥

3 1 2 1 2 0 3 1 2 3 1 2 0 1 2 0
1610. तुरण्यवः -मधुमन्तम्-घृतश्चुतम्-घृत- श्चुतम्। विप्रासः
3 2 3 2 3 1 2 3 2 3
- वि - प्रासः -अर्कम्- आनृचुः। अस्मेइति- रयिः -पप्रथे
1 2 0 1 2 0 3 1 2 3 1 2 1 2 0
-वृष्ण्यम् - शवः । अस्मेइति - स्वानासः - इन्दवः ॥

आ-12,अ-3,प-37,जे-वि-17-19

1 2 0 3 1 2 0 3 2 3
1611. गोमत् - नः - इन्दो - अश्ववत् । सुतः - सुदक्ष - सु -दक्ष
1 2 0 3 1 2 0 1 2 0 1 2 0 3
-धनिव - शुचिम् -च- वर्णम् - अधि - गोषु - धारय ॥

2 3 1 2 0 3 1 2 3 2
1612. सः - नः - हरीणाम् - पते । इन्दो - देवप्सरस्तमः - देव
3 1 2 0 3 1 2 0 3 1 2 0
-प्सरस्तमः। सखा - स - खा- इव- सख्ये- स- ख्ये-नर्यः
3 2 3
- रुचे - भव॥

1 2 0 3 2 1 2 0 3 2
1613.सनेमि - त्वम् - अस्मत्- आ ।अदेवम् -अ- देवम्-कम्-
3 1 2 3 2 3 1 2 0 1 2 0 1 2 0 3 2
चित्-अत्रिणम्। साह्वान्-इन्दो-परि-बाधः-अप-द्वयुम्।

आ-14,अ- 5,प-49,धी-वि-6-20

3 1 2 3 2 3 1 2 0 3 1 2 0
1614.अञ्जते- वि - अञ्जते-सम्-अञ्जते। क्रतुम्-रिहन्ति-मध्वा
3 2 3 1 2 0 3 2 3 2 3 1 2
-अभि-अञ्जते । सिन्धोः-उच्छ्वासे-उत्-श्वासे-पतयन्तम्

3 1 2 3 2 3 2 3 2 3 2
-उक्षणम् । हिरण्यपावाः - हिरण्य- पावाः -पशुम्-अप्सु
3
- गृभ्णते।।

3 1 2 3 1 20 1 20 3 2
1615.विपश्चिते - विपः - चिते - पवमानाय- गायत। मही - न
1 20 1 20 1 2 0 3 1 2 0 3 2 1 20
- धारा- अति -अन्धः - अर्षति। अहिः - न-जूर्णाम्-अति
3 1 20 1 2 0 1 20 3 1 2 0 1 2 0
-सर्पति- त्वचम्-अत्यः-न-क्रीडन्-असरत्-वृषा-हरिः।।

3 2 3 2 1 2 0 1 2 0 3 1 2
1616. अग्रेगः-अग्रे - गः - राजा -अप्यः - तविष्यते। विमानः
3 1 20 1 20 3 1 20 1 20 1 2 0
-वि - मानः-अह्नाम् -अ- ह्नाम् -भुवनेषु-अर्पितः। हरिः
3 1 2 3 2 3 3 1 2 3 1 2 0 3 2
-घृतस्नुः -घृत-स्नुः-सुदृशीकः-सु - दृशीकः- अर्णवः ।
3 1 2 3 2 3 2 3 2 0
ज्योतीरथः - ज्योतिः - रथः - पवते - राये - ओक्यः।।

आ-23,अ-17,प-73,फ-वि-21,च-21

इति चतुर्थः खण्डः।।4।।

इति सप्तमप्रपाठकस्य तृतीयोऽर्धः।।

सप्तमप्रपाठकश्च समाप्तः।।

इति षोडशोऽध्यायः।।16।।

****

# अथ सप्तदशोऽध्यायः ।। 17।।

## अथ अष्टमप्रपाठके प्रथमोऽर्धः।।

1 20 3 1 2 3 2 3 2 3 2 1 2 0
1617. विश्वेभिः -अग्ने -अग्निभिः। इमम्-यज्ञम्-इदम्-वचः।
1 2 0 3
चनः - धाः - सहसः - यहो।।

2 3 2 1 20 1 2 0 3 1 2 3 2 3
1618. यत्-चित्- हि - शश्वता -तना। देवन्देवम्-देवम्-देवम्
1 2 0 1 2 3 2
- यजामहे । त्वेइति - इत् - हूयते - हविः।।

3 2 3 1 2 1 2 0 3 2 1 20
1619. प्रियः - नः-अस्तु - विश्पतिः। होता - मन्द्रः - वरेण्यः।
3 2 3 1 2 3 1 2 3 2
प्रियाः - स्वग्नयः - सु -अग्नयः - वयम् ।।

आ-8,अ-2,प-36,दू-वि-15-1

1 2 0 3 1 2 1 2 0 1 2 0 1 20
1620. इन्द्रम् - वः - विश्वतः - परि । हवामहे - जनेभ्यः ।
3 1 2 3 1 20
अस्माकम् - अस्तु - केवलः ।।

2 3 2 3 2 1 2 0 1 2 0 3
1621. सः- नः-वृषन्-अमुम्-चरुम् । सत्रादवन्-सत्रा-दावन्
1 20 3 1 2 1 20 3
-अप - वृधि । अस्मभ्यम्-अप्रतिष्कुतः-अ-प्रतिष्कुतः।।

1 2 0 3 2 3 1 20 3 2 3 1 20
1622. वृषा - यूथा - इव - वँसगः । कृष्टीः - इयर्ति-ओजसा।
1 2 0 1 20 3
ईशानः -अप्रतिष्कुतः - अ - प्रतिष्कुतः ।।

आ-14,अ-3,प-34,दी-वि-13-2

2 3 2 3 2 1 2 0 1 2 0 3
1623. त्वम्- नः - चित्रः - ऊत्या । वसो - राधाँसि - चोदय।

2 3 2 3 2 3 3 2 3 2
अस्य -रायः- त्वम्-अग्ने-रथीः-असि। विदाः-गाधम्
3 2 3
- तुचे - तु - नः ।।
1 20 3 2 1 20 3 1 2 1 20
1624. पर्षि - तोकम् - तनयम् - पर्तृभिः - त्वम् । अदब्धैः -
3 1 20 3 1 2 0 1 2 0
अ-दब्धैः-अप्रयुत्वभिः-अ-प्रयुत्वभिः। अग्ने - हेडाँसि
1 2 0 3 1 20 3 1 20 3
-दैव्या-युयोधि-नः। अदेवानि-अ-देवानि-ह्वराँसि-च।
आ-11,अ-3,प-40,द-वि-6,बु-3
2 3 1 2 3 1 2 0 1 2 0
1625. किम्-इत्- ते- विष्णो- परिचक्षि - परि- चक्षि - नाम।
3 2 3 2 3 2 3
प्र- यत्- ववक्षे- शिपिविष्टः- शिपि- विष्टः - अस्मि ।
2 1 20 3 2 1 20 3 2 3 1 2
मा - वर्पः -अस्मत् -अप- गूहः - एतत्। यत्-अन्यरूपः
3 2 3 2 3 2 3 1 2
- अन्य - रूपः - समिथे - सम् - इथे - बभूथ।।
2 3 2 3 2 3 2
1626. प्र-तत्-ते-अद्य-अ-द्य-शिपिविष्ट-शिपि-विष्ट-हव्यम्।
3 2 3 1 2 3 2 3
अर्यः- शँसामि- वयुनानि- विद्वान्। तम्- त्वा- गृणामि
1 2 1 20 3 1 20 3 2
- तवसम् - अतव्यान् - अ - तव्यान् । क्षयन्तम् - अस्य
120 3 2
- रजसः - पराके।।
120 3 2 3 2 3
1627. वषट्-ते-विष्णो-आसः-आ- कृणोमि। तत्- मे-जुषस्व
2 120 3
- शिपिविष्ट - शिपि - विष्ट - हव्यम् । वर्धन्तु - त्वा

1 2 3 1 2 1 20 3 2 3
-सुष्टुतयः - सु - स्तुतयः - गिरः - मे । यूयम् - पात
1 2 3 1 2 1 20 3
- स्वस्तिभिः - सु - अस्तिभिः - सदा - नः ।।

आ-11,अ-10,प-81,भी-वि-12,ग-1-4

इति प्रथमः खण्डः।।1।।

3 2 3 2 3 1 2 0 1 20 1 20
1628. वायो- शुक्रः-अयामि - ते । मध्वः -अग्रम्-दिविष्टिषु।
3 1 20 1 20 3 2 3
आ - याहि - सोमपीतये - सोम-पीतये । स्पार्हः - देव
1 2 3 1 20
- नियुत्वता - नि - युत्वता ।।

1 2 0 3 1 20 3 2 3
1629. इन्द्रः- च- वायो- एषाम् । सोमानाम्-पीतिम्-अर्हथः।
2 3 1 20 3 2 1 20 3 20*
युवाम्- हि - यन्ति- इन्दवः। निम्नम्-आपः-न-सध्र्यक्
3 20*
- स - ध्र्यक् ।।

1 20 1 20 3 1 2 3 1 2 3 1 20 3
1630. वायो - इन्द्रः-च- शुष्मिणा। सरथम्-स-रथम्- शवसः
1 2 3 1 2 3 1 20 3 1 2
- पतीइति । नियुत्वन्ता - नि - युत्वन्ता - नः - ऊतये ।
3 1 20 1 20 3
आ - यातम् - सोमपीतये - सोम - पीतये ।।

आ-17,अ-6,प-53,टि-वि-10-5

1 20 3 2 1 20 1 20 3 1 20 3 2
1631. अध- क्षपा- परिष्कृतः- परि- कृतः। वाजान्-अभि- प्र
3 1 20 3 1 2 3 1 20 1 20 120
- गाहसे । यदि- विवस्वतः- वि- वस्वतः- धियः। हरिम्
3 1 20
- हिन्वन्ति - यातवे ।।

2 3 1 20 3 1 2 3
1632. तम् -अस्य - मर्जयामसि। मदः- यः- इन्द्रपातमः-इन्द्र
1 20 1 20 3 1 2 3 2 3 2 3 2
- पातमः । यम् - गावः - आसभिः - दधुः। पुरा- नूनम्
3 1 2
- च - सूरयः ।।

2 1 20 3 2 3 2 3 2 3
1633. तम् - गाथया - पुराण्या । पुनानम् - अभि -अनूषत।
2 3 1 2 3 1 2 1 20 1 20
उत-उ- कृपन्त- धीतयः । देवानाम्- नाम -बिभ्रतीः।।

आ-15,अ-3,प-46,बू-वि-5-6

1 20 3 1 20 3 1 2 3 2
1634. अश्वम् - न - त्वा - वारवन्तम् । वन्दध्यै - अग्निम्
1 20 3 1 2 3 1 20 3 1 2
- नमोभिः। सम्राजन्तम्-सम्-राजन्तम्-अध्वराणाम्।।

2 3 2 1 20 3 1 2 3 2 3
1635. सः-घ- नः -सूनुः- शवसा। पृथुप्रगामा- पृथु - प्रगामा
1 2 3 1 20 3 2 3 1 2 3
- सुशेवः- सु- शेवः। मीढ्वान्-अस्माकम्- बभूयात्।।

2 3 2 3 2 3 2 3 2 1 20
1636. सः- नः- दूरात्- दुः-आत्- च-आसात्-च। नि- मर्त्यात्
3 2 3 2 1 20 3 1 2 3 2 3
- अघायोः । पाहि-सदम्-इत्-विश्वायुः-विश्व-आयुः।।

आ-8,अ-4,प-42,ध-वि-11-7

2 3 1 20 3 2 1 2 0 3
1637. त्वम् - इन्द्र - प्रतूर्तिषु - प्र-तूर्तिषु। अभि-विश्वाः-असि
1 20 3 2 3 2 3 2 3 2 3
-स्पृधः। अशस्तिहा- अशस्ति- हा -जनिता-वृत्रतूः-वृत्र
2 3 2 3 2
- तूः -असि ।त्वम् - तूर्य - तरुष्यतः ।।

1 20 3 1 20 3 1 2 3 1 2 1 20
1638. अनु-ते- शुष्मम्-तुरयन्तम्-ईयतुः। क्षोणीइति-शिशुम्

3 1 2 1 2 0 3 1 20 3 1 2
- न - मातरा । विश्वाः - ते - स्पृधः- श्नथयन्त -मन्यवे।
3 2 3 1 20
वृत्रम्- यत्- इन्द्र - तूर्वसि।।

आ-9,अ-3,प-38,है-वि-3-8

इति द्वितीयः खण्डः।। 2।।

3 2 120 3 2 1 20 1 20 3
1639. यज्ञः- इन्द्रम् -अवर्धयत्। यत्- भूमिम्- व्यवर्तयत् -वि
1 20 3 2 3 2 3 2 3 2
- अवर्तयत्। चक्राणः -ओपशम्-ओप- शम् - दिवि ।।

2 3 1 2 3 1 20 1 20 3 2
1640. वि - अन्तरिक्षम् - अतिरत् । मदे - सोमस्य - रोचना ।
1 2 0 1 2 3 2
इन्द्रः - यत् - अभिनत् - वलम् ।।

2 3 1 20 3 2 3 2
1641. उत् - गाः - आजत् - अङ्गिरोभ्यः । आविः - आ - विः -
3 2 1 20 3 2 1 2 3 2
कृण्वन् - गुहा - सतीः । अर्वाञ्चम् - नुनुदे - वलम् ।।

आ-10,अ-3,प-36,कि-वि-6,गू-9

2 3 1 2 3 1 20 1 2 0 3 2
1642. त्यम्-उ- वः- सत्रासाहम्-सत्रा-साहम्। विश्वासु- गीर्षु
1 20 3 2 3 1 2
- आयतम् - आ - यतम् । आ - च्यावयसि - ऊतये ।।

3 2 1 20 3 1 2 3 1 2 3 2
1643.युध्मम्- सन्तम् -अनर्वाणम्-अन्-अर्वाणम्। सोमपाम्
3 2 1 20 3 1 20
- सोम - पाम् - अनपच्युतम् -अन् - अपच्युतम् । नरम्
3 1 2 3 2 3
- अवार्यक्रतुम् - अवार्य - क्रतुम्।।

1 20 3 2 2 2 3
1644.शिक्ष - नः- इन्द्र - रायः - आ। पुरु -विद्वान्- ऋचीषम।

1 20 3 1 20 1 20
अव - नः - पार्ये - धने ।। आ-10,अ-6,प-41,झे-वि-3-10

1 20 3 2 3 2 1 20 1 20 3 2 1 20
1645.तव- त्यत्- इन्द्रियम्- बृहत् । तव- दक्षम् -उत - क्रतुम्।

1 20 3 1 2 1 20
वज्रम् - शिशाति - धिषणा - वरेण्यम्।।

1 20 3 1 20 3 2 3 1 20
1646.तव - द्यौः - इन्द्र - पौंस्यम् - पृथिवी - वर्धति - श्रवः ।

1 20 1 20 3
त्वाम् - आपः - पर्वतासः - च - हिन्विरे ।।

2 1 20 3 2 1 20 3 2 3 2 3
1647. त्वाम्-विष्णुः- बृहन् - क्षयः। मित्रः - मि - त्रः - गृणाति

1 20 1 20 3 1 20 1 20
- वरुणः ।त्वाम् - शर्द्धः - मदति -अनु - मारुतम् ।।

आ-17,अ-1,प-38,चै-वि-10-11

इति तृतीयः खण्डः।।3।।

1 20 3 1 20 3 1 2 3 1 2
1648. नमः - ते - अग्ने - ओजसे । गृणन्ति - देव - कृष्टयः ।

1 20 3 1 2 3 1 20 3
अमैः - अमित्रम् - अ - मित्रम् - अर्दय ।।

3 2 3 1 20 3 1 20 3 1 2
1649.कुवित्- सु - नः- गविष्टये- गो-इष्टये।अग्ने -संवेषिषः

3 1 20 3 2 1 20 1 20 3 2 3
-सम्-वेषिषः-रयिम्। उरुकृत्-उरु-कृत्-उरु-नः-कृधि।।

2 3 2 3 2 1 20 3 2
1650.मा- नः-अग्ने-महाधने-महा- धने। परा-वर्क्-भारभृत्-

3 2 3 1 2 3 1 20 3 2 3
भार-भृत्-यथा। संवर्गम्-सम्-वर्गम्-सम्-रयिम्-जय।।

आ-11,अ-7,प-47,चु-वि-5,णु-12

2 3 1 2 1 20 1 20 3 1 2
1651.सम्- अस्य- मन्यवे- विशः । विश्वाः - नमन्त -कृष्टयः।
3 1 2 3 1 2 3 1 20
समुद्राय - सम् - उद्राय - इव - सिन्धवः ।।

2 3 1 2 1 20 1 20 3 1 2
1652.वि - चित्-वृत्रस्य - दोधतः। शिरः - बिभेद - वृष्णिना ।
1 20 3 1 2 3 2 3
वज्रेण- शतपर्वणा - शत - पर्वणा ।।

1 20 3 1 2 3 1 2
1653.ओजः- तत्-अस्य- तित्विषे। उभेइति- यत्- समवर्तयत्
3 1 20 1 2 0 1 20 3 1 20 3 1 2
- सम्-अवर्तयत्। इन्द्रः - चर्म - इव - रोदसीइति ।।

आ-11,अ-3,प-36,र्ये-वि-2,ग-1-13

3 1 2 3 1 2 0 1 2 0 1 2 0 3 1 2 3 1 20
1654. सुमन्मा- सु- मन्मा- वस्वी - रन्ती -सूनरी - सु - नरी ।।

1 20 3 2 3 2 3 2 1 20 3 2
1655. सरुप-स-रूप-वृषन्-आ-गहि-इमौ-भद्रौ-धुर्यौ-अभि।
2 3 2 1 20 3
तौ - इमौ - उप - सर्पतः ।।

2 3 1 2 3 1 20 1 20 3
1656.नि- इव- शीर्षाणि- मृढ्वम् । मध्ये -आपस्य -तिष्ठति।
1 20 3 1 2 3 2
श्रृङ्गेभिः - दशभिः - दिशन् ।।

आ-10,अ-3,प-32,बा-वि-3,यि-14

इति चतुर्थः खण्डः।।4।।

इत्यष्टमप्रपाठकस्य प्रथमोऽर्धः।।

इति सप्तदशोऽध्यायः।।17।।

## अथ अष्टादशोऽध्यायः।। 18।।

अष्टाष्टमप्रपाठके द्वितीयोऽर्धः।।

1 2 0 1 2 0 3 2 3 2 3
1657.पन्यंपन्यम्- पन्यम्- पन्यम्- इत् -सोतारः। आ - धावत
1 2 0 1 2 0 3 1 2 1 2 0
- मद्याय। सोमम् - वीराय - शूराय।।

2 3 2 3 0 1 2 3 1 2 3 1 2 0 3 2 3
1658.आ- इह -हरीइति-ब्रह्मयुजा-ब्रह्म-युजा। शग्मा - वक्षतः
1 2 0 3 1 2 0 3 2 1 2 0
- सखायम् - स - खायम्। इन्द्रम् - गीर्भिः - गिर्वणसम्
3
- गिः - वनसम् ।।

1 2 0 3 2 3 2 3 2 3 2 3 2
1659.पाता- वृत्रहा - वृत्र- हा - सुतम्। आ-घ-गमत् - न -आरे
3 2 3 1 2 3 2 3
- अस्मत् । नि - यमते- शतमूतिः- शतम् - ऊतिः।।

आ-10,अ-6,प-43,ङा-वि-5-1

2 3 1 2 0 3 2 3 2 3
1660.आ - त्वा - विशन्तु - इन्दवः । समुद्रम् - सम् -उद्रम्-इव
1 2 0 3 1 2 0 3
-सिन्धवः। न - त्वाम् - इन्द्र - अति - रिच्यते ।।

3 1 2 3 2 3 2 1 2 0 3
1661.विव्यक्थ- महिना - वृषन्। भक्षम् - सोमस्य - जागृवे ।
2 3 1 2 3
यः - इन्द्र - जठरेषु - ते ।।

1 2 0 3 1 2 1 2 0 3
1662.अरम्- ते-इन्द्र-कुक्षये। सोमः-भवतु-वृत्रहन्-वृत्र-हन्।
1 2 0 1 2 0 1 2 0
अरम् - धामभ्यः - इन्दवः ।।

आ-9,अ-2,प-36,का-वि-4-2

1 20 1 20 3 2 3 1 2 3 2
1663. जराबोध-जरा-बोध- तत् - विविड्ढि । विशेविशे- विशे
3 1 2 1 20 3 1 2 3 2
- विशे - यज्ञियाय । स्तोमम् - रुद्राय - दृशीकम् ।।

2 3 2 3 2 3 2 3 1 2 3 2
1664.सः- नः-महान्-अनिमानः-अ-निमानः ।धूमकेतुः-धूम
3 2 3 2 3 2 1 20 3
-केतुः-पुरुश्चन्द्रः-पुरु - चन्द्रः । धिये-वाजाय-हिन्वतु।।

2 3 2 3 1 2 1 20 3 2 3
1665.सः- रेवान्- इव-विश्पतिः ।दैव्यः - केतुः - श्रृणोतु- नः।
2 3 2 3 1 2 3 2 3
उक्थैः - अग्निः - बृहद्भानुः - बृहत् - भानुः ।।

आ-5,अ-6,प-40,झै-वि-17,भे-3

2 3 2 1 20 3 1 2 3 1 2
1666.तत् - वः - गाय - सुते - सचा । पुरुहूताय - पुरु - हूताय
1 20 1 20 3 1 2
- सत्वने । शम् - यत् - गवे - न - शाकिने ।।

2 3 1 20 3 2 1 20 1 20
1667.न - घ - वसुः - नि - यमते। दानम् - वाजस्य - गोमतः ।
3 1 20 1 20 1 20
यत् - सीम् - उप - श्रवत् - गिरः।।

3 1 2 3 2 3 2 3 2 1 20
1668.कुवित्सस्य - कुवित् - सस्य - प्र- हि - व्रजम् ।गोमन्तम्
3 2 3 2 1 20 1 20 1 20 3
- दस्युहा-दस्यु- हा - गमत्।शचीभिः-अप - नः-वरत्।।

आ-13,अ-3,प- 42,फै-वि-5- 4

इति प्रथमः खण्डः।।1।।

3 2 1 20 3 2 3 2
1669. इदम् - विष्णुः - वि - चक्रमे । त्रेधा - नि - दधे - पदम् ।
1 20 3 2
समूढम् - सम् - ऊढम् -अस्य - पाँसुले ।।

1 2 0 3 2 3 1 2 0 3 2 3 2
1670. त्रीणि - पदा - वि - चक्रमे । विष्णुः - गोपाः - गो - पाः
1 2 0 3 1 2 0 1 2 0 3 1 2
- अदाभ्यः - अ - दाभ्यः । अतः - धर्माणि - धारयन् ।।

1 2 0 1 2 0 3 2 3 1 2 3 2
1671. विष्णोः - कर्माणि - पश्यत । यतः - व्रतानि - पस्पशे ।
1 2 0 1 2 0 1 2 0 3
इन्द्रस्य - युज्यः - सखा - स - खा ।।

2 1 2 0 3 2 3 2 1 2 0 3 1 2
1672. तत् - विष्णोः - परमम् - पदम् । सदा-पश्यन्ति-सूरयः।
3 2 3 1 2 0 1 2 0 3
दिवि - इव - चक्षुः - आततम् - आ - ततम् ।।

2 1 2 0 3 1 2 3 1 2
1673. तत् - विप्रासः- वि-प्रासः-विपन्युवः। जागृवाँसः - सम्
3 1 2 0 3 2 3 2
- इन्धते । विष्णोः - यत् - परमम् - पदम् ।।

1 2 0 3 2 3 1 2 0 1 2 0 3 2 3
1674. अतः- देवाः -अवन्तु- नः। यतः -विष्णुः -विचक्रमे - वि
2 3 2 1 2 0 1 2 0
- चक्रमे । पृथिव्याः - अधि - सानवि ।।

आ-23,अ-7,प-75,चा-वि-23-5

2 3 2 3 1 2 3 2 3 2 3 2
1675. मा- उ - सु - त्वा-वाघतः - च - न । आरे - अस्मत् - नि
3 3 1 2 3 1 2 3 1 2 0 3
- रीरमन्। आरातात्- वा -सधमादम्- सध- मादम् - नः
2 3 2 3 2 1 2 0 3
- आ - गहि । इह - वा - सन् - उप - श्रुधि।।

3 2 3 1 2 3 1 2 0 3 2 1 2 0 1 2 0
1676. इमे- हि -ते - ब्रह्मकृतः-ब्रह्म-कृतः-सुते-सचा । मधौ- न
1 2 0 1 2 0 1 2 0 1 2 0 3 1 2 3 1 2
- मक्षः - आसते। इन्द्रे - कामम् - जरितारः - वसूयवः ।

120 1 20 3
रथे-न- पादम्-आ-दधुः ।। आ-12,अ-2,प-45,त-वि-6,बू-6

1 2 0 1 20 3 2 120 120 3 2
1677. अस्तावि- मन्म-पूर्व्यम् । ब्रह्म- इन्द्राय- वोचत । पूर्वीः
3 1 2 3 2 3 2 3 2 3
- ऋतस्य- बृहतीः - अनूषत । स्तोतुः -मेधाः-असृक्षत ।।

2 1 2 0 1 20 3 2 3 2 3 1 2
1678. सम् - इन्द्रः- रायः-बृहतीः -अधूनुत । सम् - क्षोणीइति
3 1 20 3 1 2 1 20 1 20
-सम्-उ-सूर्यम् । सम्- शुक्रासः- शुचयः-सम्-गवाशिरः
3 1 20 120 3
- गो - आशिरः । सोमाः - इन्द्रम् - अमन्दिषुः ।।
आ-11,अ-1,प-33,कि-वि-16-7

1 2 0 3 1 20 3 2 3 2 120 3
1679. इन्द्राय- सोम-पातवे । वृत्रघ्ने- वृत्र-घ्ने-परि-सिच्यसे ।
1 20 3 1 20 3 1 2 3 1 2 3 1 20
नरे -च-दक्षिणावते । वीराय-सदनासदे-सदन- सदे ।।

2 3 1 2 3 1 20
1680. तम् - सखायः - स - खायः -पुरूरुचम् - पुरु - रुचम् ।
3 2 3 2 3 1 2 3 1 2 1 20 1 20
वयम् - यूयम्-च - सूरयः । अश्याम-वाजगन्ध्यम्-वाज
3 1 2 1 20 1 20 3
- गन्ध्यम् । सनेम - वाजपस्त्यम् - वाज - पस्त्यम् ।।

1 20 3 2 1 20 3 2 3 1 20
1681. परि - त्यम् - हर्यतम् - हरिम् । बभ्रुम् - पुनन्ति- वारेण ।
2 3 2 1 2 0 1 20 1 20 3 2 1 20
यः-देवान्-विश्वान् - इत् - परि । मदेन - सह-गच्छति ।।
आ-18,अ- 6,प- 49,भो-वि-3-8

2 3 2 1 2 0 3
1682. कः-तम्-इन्द्र-त्वावसो-त्वा-वसो । आ-मर्त्यः-दधर्षति ।
2 3 2 3 1 20 3 2 3 2
श्रद्धा-श्रत्- धा - हि - ते -मघवन् - पार्ये - दिवि । वाजी

1 20 3
- वाजम् - सिषासति।।

3 1 2 3 1 2 3 1 20 3 2 1 20
1683. मघोनः -स्म - वृत्रहत्येषु-वृत्र-हत्येषु-चोदय। ये-ददति
3 2 1 20 1 20 1 20 3
- प्रिया-वसु। तव-प्रणीती - प्र- नीती -हर्यश्व -हरि-अश्व
1 2 1 20 3 2 3 2
- सूरिभिः। विश्वा - तरेम - दुरिता - दुः - इता ।।

आ-9,अ-6,प-43,धि-वि-3,डि-1

इति द्वितीयः खण्डः ।।2।।

2 3 1 20 3 1 2 3 2 3 1 20
1684.आ- इत्- उ-मधोः-मदिन्तरम्-सिञ्च-अध्वर्यो-अन्धसः।
3 2 3 2 1 20 3 1 2 3 2 3
एव - हि - वीरः - स्तवते - सदावृधः - सदा - वृधः ।।

1 20 3 2 3 1 2 3 2
1685. इन्द्र - स्थातः - हरीणाम्। न-किः-ते-पूर्व्यस्तुतिम्-पूर्व्य
3 2 3 1 20 3 1 2
-स्तुतिम् । उत् - आनँश - शवसा - न - भन्दना ।।

2 3 1 20 1 20 1 20 3 1 2
1686.तम् - वः - वाजानाम् - पतिम् । अहूमहि - श्रवस्यवः ।
1 20 3 1 2 3 1 2
अप्रायुभिः - अ - प्रायुभिः - यज्ञेभिः - वावृधेन्यम् ।।

आ-9,अ-3,प-40,खु-वि-7,ए-10

2 3 20* 20* 3 1 2 3 2
1687.तम् - गूर्धय - स्वर्णरम् - स्वः - नरम् । देवासः - देवम्
3 2 3 2 3 2 3
- अरतिम् - दधन्विरे । देवत्रा - हव्यम् - ऊहिषे ।।

1 20 1 20 3
1688. विभूतरातिम् - विभूत - रातिम् - विप्र - वि - प्र -
1 2 3 2 3 2 3
चित्रशोचिषम् - चित्र - शोचिषम्। अग्निम् - ईडिष्व

1 2 3 2 1 20 3 1 2 3
- यन्तुरम् । अस्य - मेधस्य - सोम्यस्य - सोभरे ।

2 3 1 2 1 20
प्र - ईम् - अध्वराय - पूर्व्यम्।।

आ-4,अ-4,प-32,दौ-वि-3,क्ष-11

2 3 2 1 20 3 2 1 20
1689. आ- सोम -स्वानः-अद्रिभिः-अ-द्रिभिः। तिरः-वाराणि

3 1 2 1 20 3 2 3 20॰ 3 1 20
- अव्यया । जनः - न - पुरि - चम्वोः - विशत् - हरिः ।

1 20 1 20 3
सदः - वनेषु - दध्रिषे।।

2 3 2 1 2 0 3 20॰ 3 2 1 2 0
1690. सः-मामृजे-तिरः-अण्वानि-मेष्यः। मीढ्वान्-सप्तिः-न

3 2 3 1 2 3 1 20 1 20 3 1 2
-वाजयुः। अनुमाद्यः-अनु-माद्यः-पवमानः-मनीषिभिः।

1 20 1 20 3 1 20
सोमः - विप्रेभिः - वि - प्रेभिः - ऋक्वभिः ।।

आ-13,अ-3,प-37,खु-वि-11,ग-1-12

3 2 3 2 1 20 3 2 3 1 2
1691. वयम् - एनम् - इदा - ह्यः । अपीपेम - इह - वज्रिणम् ।

1 20 3 2 3 2 1 20 3 2 3 2 3 2
तस्मै - उ - अद्य -अ - द्य- सवने- सुतम् -भर। आ-नूनम्

3 2
- भूषत - श्रुते ।।

1 20 3 2 3 1 2 3 1 20
1692. वृकः - चित्-अस्य - वारणः - उरामथिः - उरा - मथिः ।

3 1 2 3 2 3 2 3 1 20 3 2
आ- वयुनेषु-भूषति। सा -इमम्-नः-स्तोमम्-जुजुषाणः

3 1 20 3 1 2 3 2
-आ - गहि । इन्द्र - प्र - चित्रया - धिया ।।

आ-7,अ-2,प-40,त-वि-6-13

1 2 0 1 2 0 3 1 2 3 2 3 2 1 2 0 1 2 0
1693.इन्द्राग्नी- इन्द्र -अग्नीइति- रोचना-दिवः। परि-वाजेषु
3 2 3 2 3 20*
- भूषथः । तत् - वाम् - चेति - प्र - वीर्य म् ।।
1 2 0 1 2 0 3 1 2 1 20 1 2 0 1 20 3
1694.इन्द्राग्नी - इन्द्र -अग्नीइति-अपसः -परि। उप-प्र-यन्ति
3 1 2 3 1 2 3 2 0* 1 20
- धीतयः । ऋतस्य - पथ्याः - अनु ।।
1 2 0 1 2 0 3 1 2 3 1 2 3 3 1 2
1695.इन्द्राग्नी-इन्द्र-अग्नीइति-तविषाणि-वाम्। सधस्थानि
3 2 3 1 2 0 3 2 3 1 2 3 1 20
-सध- स्थानि- प्रयाँसि-च । युवोः-अप्तूर्यम्-अप्- तूर्यम्
3 2
- हितम् ।। आ-14,अ-5,प-40,ति-वि-2,का-14
2 3 2 1 2 0 1 20 1 2 0 3
1696.कः- ईम्- वेद- सुते-सचा । पिबन्तम्- कत्- वयः- दधे।
2 1 2 0 3 1 2 3 1 2 1 20
अयम् - यः - पुरः - विभिनत्ति - वि - भिनत्ति-ओजसा ।
3 2 3 2 1 2 0
मन्दानः - शिप्री - अन्धसः ।।
3 2 3 2 3 2 3 2 3 1 2 3 2 3
1697.दाना- मृगः- न-वारणः। पुरुत्रा-चरथम्-दधे। न-किः-
2 3 2 3 2 3 2 3 1 20
त्वा-नि-यमत्-आ-सुते-गमः। महान्-चरसि-ओजसा।
2 3 2 1 2 0 3 2 1 2 0
1698.यः-उग्रः-सन्-अनिष्टृतः- अ-निष्टृतः । स्थिरः - रणाय
1 2 0 3 1 2 0 3 2 3 1 2 3 1 2
- सँस्कृतः-सम् - कृतः। यदि - स्तोतुः - मघवा - श्रृणवत्
1 20 1 2 0 3 2 3
- हवम् । न - इन्द्रः - योषति - आ - गमत् ।।
आ-13,अ-3,प-58,छो-वि-13-15

इति तृतीयः खण्डः।।3।।

1 20 3 1 2 0 3 1 2 120
1699. पवमानाः - असृक्षत । सोमाः - शुक्रासः - इन्दवः ।
3 2 1 20 1 20
अभि - विश्वानि - काव्या ।।

1 20 3 2 120 3 1 2 3
1700.पवमानाः - दिवः - परि - अन्तरिक्षात् - असृक्षत ।
2 1 20 1 20
पृथिव्याः - अधि - सानवि ।।

1 20 3 1 2 3 2 3 120
1701.पवमानासः - आशवः - शुभ्राः - असृग्रम् - इन्दवः ।
1 20 1 20 1 20 1 20
घ्नन्तः - विश्वाः - अप - द्विषः ।।

आ-15,अ-ना,प-25,ब्ले-वि-12,रा-ग-2-16

3 2 3 1 2 3 120 3 1 2 3
1702.तोशा - वृत्रहणा - वृत्र - हना - हुवे । सजित्वाना - स
1 20 1 20 3 2 3
-जित्वा- ना -अपराजिता -अ-पराजिता। इन्द्राग्नी-इन्द्र
1 2 3 1 2 3 1 20
- अग्नीइति - वाजसातमा - वाज - सातमा ।।

2 3 1 2 3 1 2 3 1 20
1703. प्र- वाम्-अर्चन्ति-उक्थिनः। नीथाविदः - नीथ - विदः
3 1 2 1 20 120 3 1 2 120 3
-जरितारः। इन्द्राग्नी-इन्द्र-अग्नीइति- इषः-आ-वृणे।।

1 20 120 3 1 2 3 2 120 3 1 2
1704.इन्द्राग्नी- इन्द्र -अग्नीइति- नवतिम्- पुरः ।दासपत्नीः
3 2 3 2 120 1 20
- दास -पत्नीः -अधूनतम् । साकम् - एकेन - कर्मणा।।

आ-13,अ-9,प-44,ने-वि-क्ष-17

120 3 1 2 3 2 3 120
1705.उप- त्वा - रण्वसन्दृशम् - रण्व - सन्दृशम् । प्रयस्वन्तः
1 20 3 1 2 1 20
-सहस्कृत - सहः - कृत ।अग्ने - ससृज्महे - गिरः ।।

1 20 3 2 3 1 20 1 20 1 20 3 2
1706.उप - छायाम् - इव - घृणेः । अगन्म - शर्म - ते - वयम् ।
1 20 1 20 1 20 3
अग्ने - हिरण्यसंदृशः - हिरण्य - संदृशः ।।

2 3 2 3 2 3 2 3 1 2 3 2 3
1707.यः-उग्रः-इव- शर्यहा- शर्य- हा। तिग्मश्रृङ्गः-तिग्म-श्रृङ्गः
2 1 20 1 20 1 20 3 1 2
- न - वँसगः ।अग्ने - पुरः - रुरोजिथ।।

आ-14,अ-5,प-38,नै-वि-12-18

3 1 2 3 2 3 2 3 1 2
1708. ऋतावानम् - वैश्वानरम् - वैश्व - नरम् । ऋतस्य
1 20 1 20 1 20 3 2 3
-ज्योतिषः-पतिम् ।अजस्रम्-अ-जस्रम्-घर्मम्- ईमहे।।

2 3 2 3 2 3 2 3 1 2 20
1709. यः - इदम् - प्रतिपप्रथे - प्रति - पप्रथे । यज्ञस्य - स्वः
3 2 3 2 3 2 3 2
- उत्तिरन् - उत् - तिरन् । ऋतून् - उत् - सृजते - वशी।।

3 2 3 1 2 1 20 1 20 3 1 2 1 20
1710.अग्निः - प्रियेषु - धामसु । कामः - भूतस्य - भव्यस्य ।
3 2 3 2 1 20 3
सम्राट् - सम् - राट् - एकः - वि - राजति ।।

आ-7,अ-5,प-38,जै-वि-6,चू-19

इति चतुर्थः खण्डः।।4।।

इत्यष्टमप्रपाठके द्वितीयोऽर्धः।।

इत्यष्टादशोऽध्यायः।।18।।

*****

अष्टादशैव ऊकारे ओकारे नास्त्यवग्रहः।। 7।। स्तोभपदहितवाक्यं चतुर्थं परिकीर्तितम्।।8।।

।।इति हितवाक्यं समाप्तम्।।

अस्य विवरणम्-

सुचित्तोदानं इत्यादिना स्तोभपदस्यावग्रहसूचकं हितवाक्यम्। अत्र अकारे श्रूयमाणे पञ्च, दश एक इति अन्यतमसंख्ययावग्रहं जानीयात्। आकारे द्वौ षट् नव इत्यन्यतमसंख्या। इकारे सप्त-त्रिः इत्यन्यतरेण, उकारे चत्वारः , सप्तदशः, पञ्चविंशतिः, चत्वारिंशत् इति अन्यतमेन अवग्रहा ज्ञेयाः। ऊकारे अष्टादशसंख्यया, ऋवर्णे चतुर्विंशतिसंख्यया च जानीयात्। ओकारे श्रुते अवग्रहो नास्ति।।

स्तोभपदाख्यो ग्रन्थः प्रपाठकद्वयात्मकः। प्रथमे प्रपाठके चतुर्दशखण्डा विद्यन्ते। अत्र च प्रथमे वाक्ये चतुर्दशाक्षराणि क्रमशस्तेषां अवग्रहसूचकानि सन्ति। प्रथमखण्डे पञ्चविंशतिः अवग्रहाः, तस्य उकारः सुचित्तो इत्यत्र उकारः प्रथमं श्रूयते। द्वितीये प्रपाठके एकादशखण्डाः अत्रापि द्वितीये वाक्ये एकादशाक्षराणि सन्ति। प्रथमं सु -इति उ-कारः, तेन चत्वारः अवग्रहाः ज्ञाताः, एवमेव क्रमशः अक्षरेण विवरणोक्त प्रकारेण अवग्रहान् जानीयात्।

**10.3. अवग्रहसूत्रम् -**

1. अथावगृह्यमतिचतुरक्षरं पदम्।।

अथेति मङ्गलार्थः। यदवगृह्यं पदं तदुपदेक्ष्यामः। यत् वेष्टनं पदं तत् अवग्रहमित्युच्यते तदेवावगृह्यम्। यत्र पदे चतुरक्षरात् परं पञ्चाक्षर प्रभृति विद्यते तत्पदं अवगृह्यते। यथा हव्यदातये, और्व भृगुवत् अनयोः पञ्चाक्षराणि विद्यन्ते। अतः अवगृह्यते। हव्य - दातये, और्व- भृगुवत् इति एवं जानीयमूह्यम्।।

2. विभागे च।।

पदस्य विभागे सति, पञ्चाक्षराणि सन्ति चेत् तदपि अवगृह्यते। यथा नर्यापसं, दध्याशिरः, वाताप्याय इति। अत्र नर्यापसं इति सन्धौ चतुरक्षराणि विभागे पञ्चाक्षराणि नर्य - अपसं इति एवमुत्तरयोरपि।।

3. अनीचमतदन्त्यमशक्वरीष्वेवयामरुत्।।

एवमति चतुरक्षरस्य पदस्य अवग्रहः उत्सर्गतः प्राप्नोति। इदानीमपवाद उच्यते। अनीचं, सर्वनीचं, सर्वानुदात्तं पदं अतिचतुरक्षमपि नावगृह्यते। वर्तयायसि, योपयामसि इति, एवं तकारान्तं पदं नावगृह्यते। अपूपवन्तं, इन्द्रापर्वता, उभयाहस्ती, द्रविणस्वन्तः इत्यादिषु। अत्र अतिचतुरक्षरमपि पदं नावगृह्यते। अत्र तदन्तमिति अजन्तस्यापि तकारस्य ग्रहणम्। एवयामरुत् इति तदन्तस्यापि अवग्रहो विद्यते। अतः अशक्वरीष्विति अपोद्यते उत्सर्ग प्रवृत्यर्थम् अत्रातिजगत्याः शक्वरीत्वमुक्तम्।।

4. अभ्यस्तश्चानेकाक्षरः।।

अनेकाक्षरं पदं ऋचि अभ्यस्तं चेत् तत् अवगृह्यते। प्रप्रवस्त्रिष्टुभमिषं, अद्याद्यश्वः श्वः, यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे, योगे योगे तवस्तरम्। यत्सोमे सोम आभुवः इदमिदम्। अहरहश्शुन्ध्युः अत्र द्व्यक्षरपदानां अभ्यासात् अवग्रहः प्रप्रव = प्र- प्र- वः। यज्ञा यज्ञा वो = यज्ञा - यज्ञा - वः। द्यविद्यवि = द्यवि- द्यवि। इत्यादि एकाक्षरस्याभ्यासे न अवग्रहः। आप्राद्यावा पृथिवी, आयं गौः इत्यत्र आ- अप्राः, आ - अयं - गौः इत्यादि अतः अनेकाक्षर इति।।

5. एको नीचे।।

एकोऽपि वर्णः अभ्यस्तः नीचे प्रत्यये अवगृह्यते नीचे। यद्यत् = यत् - यत्।।

6. कृद्वित्सातौ प्रतिवसोन्तं च।।

कृत् - वित् - सातौ - वसु - एतदन्तं पदमवगृह्यते। खजकृत् - ज्योतिष्कृत्- नभोवित् - क्रतुवित् - वाजसातौ- शूरसातौ- विभावसो- धियावसुः इत्यादौ प्रति किम्? खज् - कृत्। ज्यतिः - कृत् इति।।

7. वीर्दाहाक्रतुं बाहुम्।।

वीः दाः हा क्रतु बाहु एतदन्तं पदं अवगृह्यते पदवीः = पद - वीः, देवावीः = देवा - वीः। द्रविणोदाः = द्रविणः - दाः। अप्सुदाः = अप्सु- दाः। सत्राहा = सत्रा - हा। अमित्रहा = अमित्र- हा। शतक्रतो = शत- क्रतो। कविक्रतुम् = कवि- क्रतुम्। सहस्रबाह्वे = सहस्र- बाह्वे। वज्रहबाहुम् = वज्र- बाहुम् इत्यदि।।

8. उपसर्गादिः।।

उपसर्गः आदौ यस्य तत्पदं अवगृह्यते। प्रमृषे = प्र- मृषे। प्रचेताः = प्र- चेताः। उपमाते = उप- माते। अपघ्नन् = अप- घ्नन्। अवस्वरत् = अव - स्वरत्। आसदम् = आ - सदम्। विवस्वत् = वि- वस्वत्। सुक्रतुम् = सु- क्रतुम्। प्रत्यङ् = प्रति - अङ्। समिद्धः = सम् - इद्धः। सम्म्राजम् = सम्- राजम् इत्यादि।।

9. चन्द्रशतसघहव्यम्।।

पूर्वसूत्रात् आदिः इति पदं अनुकृष्यते। चन्द्रः आदिः यस्य तत् चन्द्रादि पदं अवगृह्यते। चन्द्रमसः चन्द्र मसः गृहे। चन्द्रमाः एवं शतवाजया शतामघम् सधस्थात् सधमादे हव्यदातये हव्यवाट् इत्यादि।।

10. सूर्यस्साकायाम्।।

साकमुक्षो मर्जयन्त इत्यस्यां ऋचि सूर्यस्य = सू ऊर्यस्य इति सूर्यशब्दः अवगृह्यते। दृशे विश्वाय सूर्यम् इत्यत्र अवग्रहो नास्ति अतः साकायामिति।।

11. समासोऽतोन्यत्र।।

अतः निर्दिष्टात् अन्यत्र समासः तत्पुरुषादि समासान्तपदं अवगृह्यते।जराबोध इत्यादि।।

12. नवं पुराणेन बहुपदश्चेत्।।

नवं पदं पुराणेन पदेनावगृह्यते, बहुपदश्चेत् समासो भवति। समुद्र व्यचसम् प्रजापतेः अप्रतिधृष्ट शवसम्।।

13. सर्वत्र पुत्र मित्र सखि शब्दाः अद्रि शतक्रतोरवग्राह्याः।

आदित्य विप्र जातवेदाश्च। सत्पति गोपति वृत्रहा समुद्राश्च अद्य अन्य इन्द्राग्नी स्वस्ति न आदिषु। स्वर्युव देवयवश्चारतिं देवतातये। चिकितिश्चुक्रुधं चैवेत्येताश्च प्रकृतयो नावगृह्यन्ते।

।। इति अवगृह्यसूत्रम्।।

अवग्रहसूत्रविवरणम्-

पुत्रेभ्यः = पुत् - त्रेभ्यः। यथा स्तुषे मित्रम्= मि - त्रम्। सखायः = स - खायः ।अद्रिः = अ - द्रिः। आदित्य = आ- दित्य। विप्र = वि - प्र। जातवेदाः = जात - वेदाः। सत्पतिम् = सत् - पतिम्। गोपतिम् = गो - पतिम्। वृत्रहा = वृत्र - हा। समुद्रः = सम्- उद्रः। अद्य = अ - नः देव । अन्यः = अन्- यः। इन्द्राग्नी = इन्द्र - अग्नी इति । स्वस्ति नः = सु - अस्ति - नः। स्वर्युवः । देवयवः। अरातिम् देवतातये। चिकितिः। चुक्रुधम् एताः नावगृह्यन्ते।।

1. स्वर्युवः- अच्छावइन्द्रं मतयः स्वर्युवः (पू- 4.3.6)
2. देवयवः- मर्मृज्यन्ते देवयवः (1584)
3. अरतिम् – मूर्धानं दिवो अरतिम् (पू-1.7.5)
4. देवतातये- उपमां देवतातये (पू- 4.5.1)
5. चिकितिः- अचेत्यग्निश्चिकितिः (पू- 4.11.1)
6. चुक्रुधम् -भूर्णिमृगं न सवनेषु चुक्रुधम् (पू- 3.8.5)

।।इति अवग्रहसूत्र विवरणम्।।

**10.4.मात्राकालः -**

मात्रिकं वा द्विमात्रं वा स्वर्यते यदिहाक्षरम्।
तस्यादितोऽर्धमात्रा वैशेषन्तु परतो भवेत्।। ना.शि.2.3.6

ह्रस्वस्य दीर्घस्य वा अक्षरस्य स्वरितस्य अर्धमात्रा, पूर्वं उदात्तानुदात्तसन्धिरूपत्वात् स्वरितस्य, उदात्तभागस्यार्धमात्रा अवशिष्टानुदात्तभागस्य तस्यादित उदात्तमर्धह्रस्वं इति पाणिनिः।

अदीर्घं दीर्घवत् कुर्यात् विस्वरं यत्प्रयुज्यते।
कम्पोत्स्वरिताभिगीतं ह्रस्वकर्षणमेवच ।।ना.शि.2.3.7

कम्पादिषु, अदीर्घं एकमात्रं ह्रस्वाक्षरं दीर्घवत् दीर्घाक्षरवत् द्विमात्रयुक्तं कुर्यात्। उदाहरणानि - पाह्युऽ3तद्वितीयया कम्पः। भूर्भुवस्वः उत्स्वरितम्। ओइवोइ पन्यया। यं यं यं याम्। अभिगीत ह्रस्वकर्षणे।।

निमेषकालामात्रास्यात् विद्युत्कालेति चापरे।
अक्षिपक्ष्मपातनं निमेषं तत्काला मात्रा,
विद्युत्काला इति केचित् ।। ना.शि.2.3.8
सर्वत्रपुत्रमित्रसखिशब्दा अद्रिशतक्रतोरवग्राह्याः।
आदित्यविप्रजातवेदाश्च सत्पतिं गोपतिं वृत्रहासमुद्राश्च।।
पुत्रमित्रादि शब्दाः सर्वत्र अवगृह्यन्ते। ना.शि.2.3.10
स्वर्युवो देवयवश्चारातिं देवतातये।
चिकितिश्चुक्रुधम् चैव नावगृह्णन्ति पण्डिताः।। ना.शि.2.3.11

अरतिमिति न नञसमासः, किन्तु अलंभूषणपर्याप्तवारण इति धातोरुत्पन्नम्। देवतातय इति देवता शब्दात् लि प्रत्ययः तस्य चतुर्थी। चिकितिः चुक्रुध इति चिति धातोः क्रुधू धातोश्च निष्पन्नं रूपं अतः एकपदत्वात् अवग्रहो नास्ति। अच्छा व इन्द्रं मतयः स्वर्युवः -

पू.4.9.6 , मर्मृज्यन्ते देवयवः- उ.16.5, मूर्धानं दिवो अरतिं - पू.1.7.5, उपमान्देवतातये - पू.5.1.1, अचेत्यग्निश्चिकितिः - पू.5.7.1, भूर्णिं मृगन्नसवनेषु चुक्रुधम् - पू.4.2.5 ।।

आपद्येत मकारो रेफोष्मसु प्रत्ययेष्वनुस्वारम्।
यलवेषु परसवर्णं स्पर्शेषु चोत्तमापत्तिम्।। ना.शि.2.4.4

मकारः रेफे श ष स ह इत्यूष्मसु च प्रत्ययेषु अनुस्वारं आपद्यते। समकारः य ल व इत्येतेषु णु प्रत्ययेषु परस्य समानं वर्णं आपद्यते। समकारः स्पर्शेषु प्रत्ययेषु, तत्तत् स्पर्शोत्तमवर्णापत्तिं च लभते। अनुस्वारज्ञापकं ँ एवमङ्कनम्। उदाहरणानि-

रेफस्य - मा वाँ राति - मा वाम् रातिः (पू.3.10.5) इति पदपाठः। अत्र वाम् इति मकारस्य रेफे प्रत्यये सन्धौ अनुस्वारः। शकारस्य - उद्धँशमिव, षकारस्य - हवौँषि, सकारस्य - तँ सखायः। हकारस्य त्वँ ह्येहि, यकारस्य त्वं यविष्ठ, त्वय्यविष्ठ। लकारस्य उद्यन् लोकान् - उद्यल्लोकान्, वकारस्य तं वः- तव्वो। स्पर्शेषु उत्तमापत्तिः कं काः कङ्काः, दूत्यं चरन्- दूत्यञ्चरन्। अग्निम् दूतम्- अग्निन्दूतम्। अपां फेनेन- अपाम्फेनेन। एवमादीनि द्रष्टव्यानि। य ल व इत्यत्र संयुक्तस्य पूर्ववर्णः सानुनासिकः अतः निरनुनासिकः इति अवधेयम्।।

नकारान्ते पदे पूर्वे स्वरे च परतः स्थिते।
आकारं रक्तमित्याहुः नकारेण तु रज्यते।।ना.शि.2.4.5

पूर्वे आकारपूर्वनकारान्ते पदे परतः स्वरे स्थिते रङ्गः प्रयोक्तव्यः स च आकारः सानुनासिको भवति। नकारेण रज्यते नकारस्थाने रङ्गः प्रयुज्यते। यथा महान् इन्द्रः महाँ इन्द्रः। बट् महान् असि-बण्महाँ असि।

हृदयादुत्थितो रङ्गः कांस्येन समनिस्वनः।
मृदुश्चैव द्विमात्रश्च दधन्वाँ इति निदर्शनम्।।ना.शि.2.4.8

यथा सौराष्ट्रिका नारी तक्राँ इत्यभिभाषते।
एवं रङ्गः प्रयोक्तव्यो नारदस्य मतं यथा।। ना.शि.2.4.9

रङ्गः द्विमात्रः कांस्य घट्टनसमध्वनिः मृदुश्च भवति स च ध्वनिः हृदयात् उत्तिष्ठते। यथा दधन्वाँ यो नर्य्यः इति। अस्य लोकानुभवं प्रदर्शयति सौराष्ट्रिदेशीया नारी तक्र विक्रेत्री तक्राँ इति विक्रीणाति तथा रङ्गस्वरः प्रयुज्यते इति। रङ्गविषये शिक्षान्तरेम्-

रङ्गवर्णं प्रयुञ्जीत नग्रसेत्पूर्वमक्षरम्।
दीर्घस्वर प्रयुञ्जीत पश्चान्नासिक्यमाचरेत्।।
हृदये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि।
नासिकायां तदर्धं च रङ्गस्यैवं द्विमात्रता।।

अत्र हृदयादुत्थितः इत्येतावन्मात्रमुक्तं, पाणिनीये तु हृदयमूर्धनासासु एकार्धार्धमात्रारूपेण द्विमात्रात्मकः प्रयोक्तव्य इति विवेचितम्।।
उदात्तादयः स्वराः अचामेव न व्यञ्जनानामित्याह-

स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च।
व्यञ्जनान्यनुवर्तन्ते यत्र तिष्ठति स स्वरः।। ना.शि.2.5.2
स्वरप्रधानं वैस्वर्यं आचार्याः प्रतिजानते।
मणिबद्व्यञ्जनं विद्यात् सूत्रवच्चस्वरं विदुः।। ना.शि.2.5.3
दुर्बलस्य यथा राष्ट्रं हरते बलवान् नृपः।
दुर्बलं व्यञ्जनं तद्वत् हरते बलवान् स्वरः।। ना.शि.2.5.4

उदात्तः उच्चः अनुदात्तः नीचः स्वरितः एते स्वराः स्वरं अजक्षरं आश्रयन्ति व्यञ्जनाक्षरं तु अजक्षरमनुसरति। स्वरः अच् यत्र विरमते तत्रैव व्यञ्जनमपि तिष्ठति न स्वरमतिक्रामति स्वातन्त्रेण। अग्न आयाहि इति प्रयोगे हि इत्यत्र हकारोत्तर इकारस्य विरामे, हकारोऽपि
3 5
विरमते। हीऽ234षी इति वैस्वर्येऽपि ईकारस्यैव प्रयोगः न तु हकारस्य

एवमाचार्याः अभिप्रयन्ति। तथा च अयमुदात्तः अयमनुदात्तः इति व्यवहारः अजक्षरस्यैव व्यञ्जनं तु सूत्रप्रोतमणिवत् पराधीनतया वर्तते, स्वरस्य यः उदात्तादिः स एव व्यञ्जनस्य, न तु स्वतन्त्रतया स्वरभाक्त्वम् तस्य। बलवता राष्ट्रपतिना दुर्बलः राजा यथा स्वाभिमतं नीयते तथा स्वतन्त्रेण अजक्षरेण व्यञ्जनं नीयते।।

ओभावश्च विवृत्तिश्च शषसा रेफ एव च।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः।। ना.शि.2.5.5

ऊष्मणः विसर्जनीयस्य अष्टविधागतिः अष्टविधपरिणामः। संहितायामिति शेषः उदाहरणानि-

गृणानः हव्यदातये अत्र नकारोत्तरविसर्जनीयस्य ओभावः गृणानो हव्यदातये इति (पू.1.1)। विवृत्तिः विविक्ततयावर्तनं, विश्वस्याः अरातेः - विश्वस्या अरातेः (पू.1.1.6)। समिद्धः शुक्रः- समिद्धश्शुक्रः (पू.1.1.4) शकारस्य । ज्योतिः कृणोति - ज्योतिष्कृणोति (पू.4.2.1) षकारस्य। नमः ते - नमस्ते (पू.1.2.1) सकारस्य । अमैः अमित्रम् - अमैरमित्रम् (पू.1.2.1) रेफस्य। दिवः ककुत् - दिवःककुत् (पू.1.3.7) महोभिः पाहि - महोभिः पाहि (पू.1.1.6) जिह्वामूलोपध्मयोः उदाहरणानि। एवमादीनि द्रष्टव्यानि।।

प्रथमानूष्म संयुक्तान् द्वितीयानिवदर्शयेत्।
न चैनान्प्रतिजानीयाद्यथा मत्स्यः क्षुरोऽप्सराः।। ना.शि.2.5.11

वर्गप्रथमाः वर्णाः शकारादिषु, ऊष्मसु परेषु, द्वितीयवर्ण इव प्रयोक्तव्याः। यथा मत्स्यः अत्र तकारोपरि सकारः वर्तते अतः तकारः थकारसदृशः प्रयुज्यते, न तु थकार एव इव शब्दप्रयोगात्। एवं क्षुरः अप्सराः इत्यादिषु द्रष्टव्याः। तथा च-

पदान्ताः प्रथमा वर्णाः शषसेषु परेषु तान्।

शौनको द्वितीयानिच्छेत् प्रकृत्या शाकटायनः।। शिक्षान्तरम्
अपदान्ताः प्रथमाः वर्णाः ऊष्म संज्ञे परे स्थिते।
वर्णा द्वितीया विज्ञेया उच्यन्ते वर्णवेदिभिः।।

शौनकशिक्षा श्लोकः-51

इति ऋग्वेदिनां प्रथमस्य द्वितीयवर्णत्वं नियतं, सामवेदिनां तु न तथेति ज्ञायते।

छन्दोमानं तु वृत्तं च पादस्थानं त्रिकारणम्।
ऋचस्वच्छन्दवृत्तास्तु पादास्त्वक्षरमानशः।।

ना.शि.2.6.1

पादानां परिज्ञानाय कारणत्रयं भवति छन्दः गायत्र्यादि। मानं अक्षरगणनया वृत्तं आर्यादि तस्य गुरुलघु परिज्ञानेन पादपरिज्ञानम्। ऋचः पादास्तु अक्षर प्रमाणेन भवन्ति अष्टाक्षरा एकादशाक्षरा इत्यादि ।।

स्वरभक्तिर्द्विविधात्वृकारो रेफ एव च।
स्वरोदा व्यञ्जनोदा च विहिताक्षरचिन्तकैः।। ना.शि.2.6.7

ऋकारः स्वरोदा स्वरभक्तिः, रेफः व्यञ्जनोदास्वरभक्तिः इति द्विविधा स्वरभक्तिः। स्वरादुदेतीति प्रथमा स्वरोदा ऋकारः, व्यञ्जनादुदेतीति व्यञ्जनोदा, द्वितीया रेफः।।

शषसेषु स्वरोदयां हकारे व्यञ्जनोदयाम्।
शषसेषु विवृत्तां तु हकारे संवृतां विदुः।। ना.शि.2.6.8

श ष स इत्येतेषु परेषु या स्वरभक्तिः सा स्वरोदा। हकारे परे या सा व्यञ्जनोदा सैव व्यञ्जनोदया।।

ऋवर्णतुल्यतां याति रेफः शषसहोर्ध्वगः इति स्वरभक्तेरुच्चारणं ऋवर्णवत् कार्यम्। अदर्शि अर्षासोम तर्ह्या रोहन्ति इत्यादि।।

**10.5.पूर्वार्चिक छलाक्षरम्-**

1. अग्ने नमस्तेऽग्निं वो यज्ञा एना देव आजुहोताऽबोध्यग्न ओजिष्ठ सोमँ राजा पुरुत्वा प्रमँहिष्ठीयाग्नेयं द्वादश।।12।।
2. तद्व उद्घे हेवापादुशिपान्तमिदं बहुसामि षट्।।6।।
3. ईंखयन्ती यँ रक्षन्ति उत्वामन्दन्तु तरणिं व आवइन्द्रमतीहिम एकसामि षट् ।।6।।
4. अभित्वा नकिष्टँ शग्धूषु सत्यमित्था योराजे तऊतीमइन्द्राय प्रत्यु बृहत्यष्टौ।।8।।
5. असाव्यवद्रप्सस्त्यमूषु त्रिष्टुप् त्रीणि।।3।।
6. गायन्ति प्रत्यस्मै प्रप्रव विश्वाः पृतनाऽनुष्टुप् चत्वारि।।4।।
7. इन्द्र गृणेऽभ्रातृव्यस्वादोरित्थाऽते परि प्रधन्व विश्वतोदावन्न चेत्यग्निस्त्रिकद्रुकेष्विन्द्रपुच्छन्नव।।9।।
8. उच्चा प्रसोमास उपोष्वचिक्रदत् पुनानस्सोप्रदुद्रव प्रसेनानीः पुरोजिती अभिप्रियाणीन्द्रमच्छ पवस्वमधु पवमानमेकादश ।।11
9. इन्द्रज्येष्ठं त्वमेतन्मयिवर्चो भ्राजन्त्यग्नेऽग्न आयुँष्यारणं पञ्च विदामघवन्नेकः।।6।।

छलाक्षराणि-

1. अग्ने वेखा थे दि पखेबीटौ थ दौदा छी ।। 12।।
2. तद्वौ भूडा लीणी छो चौ ।।6 ।।
3. ईंखयन्ती फुघुठुठि कोयौ ।। 6।।
4. अभित्वा ञि खापाती ङाभूठिवे।। 8।।
5. असाविटकिद्रू।। 3।।
6. गायन्ति धी फु जीयि ।। 4।।
7. इन्द्रसुते बाफ छणु बे ठु छाभट ।।19।।
8. उच्चा गा होतु फे द डे दा म पेड्रू चि ।। 11।।

9. इन्द्र ज्येष्ठ णू पे ब टो- अग्न आयूँषिधौ विदाछाठीखी आक्रन्दय छु।। 9।।

**10.6. छन्दः पद छलाक्षराणि-**

1. अग्ने ढडोटेणीजौततैभगिद ।।10।।
2. पुरुटणकैटाखिझोफेजीपोदै ।।10।।
3. उत्वा ढकुमा खैझाङुपकोतधु ।।10।।
4. इमेतोभादीघूभुभोतेझिचौधो ।।10।।
5. गृणे टैचाधैतामीघेखाबैघिचौ ।।10।।
6. उपोषु धाखिझौछाबबैठाघैचौ ।।9।।
7. इन्द्र ज्येष्ठं बा जौ गै छूङो ।।5।।
8. विदाम फुथौठो आक्रन्दयकि ।।4।।
9. स्तोभमिदाआखोटोपीठिछौभोथिजेछूटूङु
हुवेझेठीघीछाजेङाङाचौमुजौता ।।25।।

**10.7.आर्चिकछलाक्षरविवरणम्-**

छलाक्षरमिति वैदिकेषु तान्त्रिकेषु च स्वस्वासाधारण विषय सूचकाक्षरराश्यात्मको ग्रन्थः विलसतीति सम्प्रतिपन्नं संप्रदायविदाम्।

तत्र सामवेदार्चिक, पदपाठ,गानविषय छलाक्षर ग्रन्था विद्यन्ते। तेषु पूर्वार्चिक, तत्पद छलाक्षराणि खण्डानुसारेण वर्तन्ते। अतः खण्डे यत्तापरि ज्ञानाय खण्डानां आदिम पदानि संगृह्यन्तेऽत्र ग्रन्थे अग्ने नमस्तेऽग्निं वोइत्यादिना।।

छलाक्षराणि-तिरोहितार्थसूचकानि अक्षराणि छलाक्षराणीत्युच्यन्ते। तिरोहितार्थश्च सम्प्रदायविदां पूर्वाचार्याणां वचनेन परिज्ञायते तद्यथा-

दीर्घस्थाने तु स्वरितं पर्वस्थान उदात्तकम्।
मात्रा स्थाने तु धारी स्यात् प्राकृती छललक्षणम्।।

पूर्व प्रकृतिसाम्नः छलाक्षरस्योक्तत्वात् तदतिदेशेन आर्चिकछलाक्षर मुच्यते। साम्नः दीर्घं, पदं, मात्रा, इति परिगणय्य छलाक्षरज्ञानं भवति। आर्चिकस्य तु दीर्घस्थाने स्वरितं, पदस्थाने उदात्तं, मात्रास्थाने धारी इति, परिगणय्य छलाक्षराणि जानीयात् इति पद्यार्थः।।

स्वरितः, उदात्तः, धारी च, कीदृशः ग्राह्यः इति आकांक्षायां तत् विशदयति क्रमेण-

अनेकोदात्ताऽनुदात्तात् परोऽतत्पर एव च।
स्वरितः स्वारसंज्ञः स्यात् दीर्घस्थाने प्रकृत्यृचि।।1।।
अनेकानामुदात्तानामनुदात्तः परो यदि।
दीर्घस्तु शिवकोदात्तः पर्वस्थाने प्रकृत्यृचि।।2।।
एकस्वरस्थ नानार्णा अर्धर्चान्त्वा न चेत्तदा।
तद्वितीयादि धारी स्यात् मात्रास्थाने प्रकृत्यृचि।।3।।

एषामयमर्थः-

अत्र पूर्वार्चिक छलाक्षरे परिगृह्यमाणं स्वरितं लक्षयति अयं श्लोकः। प्रकृतिसाम्नि दीर्घं पदं मात्रा इति गणनम् प्रकृति ऋचि तु दीर्घस्थाने स्वरितं गणनीयम्। तच्च स्वरितं अनेन लक्ष्यते पद्येन।।

न एकं अनेकं अनेकोदात्तश्च अनुदात्तश्च तयोस्समाहारः अनेकोदात्तानुदात्तं तस्मात् परः स्वरितः स्वारसंज्ञां लभते। अतत्परः उक्त द्विविधलक्षणः यः अनेकोदात्तात् परो न भवति, यश्च अनुदात्तात् परो न भवति अर्थात् आरम्भे विद्यमानः स्वरितः सोऽपि स्वारसंज्ञां लभते। अत्र स्वरितः त्रिप्रकारः छलाक्षरे गृह्यत इत्युच्यते अनेकोदात्तात् परः, अनुदात्तात्परः , उभयविधलक्षण इति।।

1. अनेकोदातात्परः स्वरितः एनाविश्वा इत्यत्र "श्वा" इति।
2. अनुदात्तात्परः स्वरितः पुनीष उक्थ्यं अत्र "क्थ्यम्"
3. आरम्भे विद्यमानः इति क्वेयथ क्वेदसीति "क्वे"शब्दः नीवशीर्षाणि मृढ्वम् - अत्र "नी" शब्दश्च। त्रिविधमपि कठिनतया

उच्चार्यते 20 एवं कश्चन भवति। । इदमुक्त आर्चिकलक्षणे अनुदात्तात्परोऽनेक उदात्तः स्वरितोत्तरः इत्यादिना। अनेकानामुदात्तानामिति।।

4. अनेकानां एकभिन्नानां उदात्ताक्षराणां परतः अनुदात्तस्वरः यदि स्यात् तदा दीर्घः दीर्घतया उच्चार्यमाणः उदात्तः, शिवकोदात्तसंज्ञां लभते। सः प्रकृत्यृचि पर्वस्थाने गृह्यते। उदाहरणं, स नः पवस्व शं गवे, अत्र "शं" इति वर्णः। इदमेव आर्चिकलक्षणे। मध्येऽनुदात्तयोः स्यातामुदात्तौ प्रथमं तयोः इत्याद्युक्तम्।

5. एकस्वरस्थेति- एकस्वरस्थानाना वर्णाः एकस्मिन् स्वरे नानाक्षराणि यदि विद्यन्ते तदा तेषु द्वितीयादि स्वरे विद्यमानं प्रथममक्षरं विहाय अवशिष्टान्यक्षराणि मात्रास्थाने प्रकृत्यृचि गृह्णीयात्। तान्यक्षराणि यदि अर्धर्चान्ते स्युः तदा न गृह्णीयात्। उदाहरणम् अग्न आयाहि इत्यत्र या द्वितीयस्वरस्थमक्षरं तद्विहाय हि इत्यक्षरं गृह्णीयात्। अर्धर्चान्ते दातये तये इति धार्यपि न गृह्णीयात् तथा च छलाक्षरपरिज्ञानमेवं भवति। प्रथमतः स्वरितं परगणय्य गणितां संख्यां पञ्चशो विभज्य शिष्टसंख्यया वर्गाक्षरं गृह्णीयात्। क - च - ट - त - प इति वर्गाक्षराणि। अनन्तरं पूर्वोक्तमुदात्तं परिगणय्य परिगणितां संख्यां पञ्चशो विभज्यावशिष्टसंख्यया वर्गस्याक्षराणि गृह्णीयात्, एकैकस्मिन् वर्गे पञ्चाक्षराणि विद्यन्ते। यथा क, ख, ग, घ, ङ इति। स्वरितगणनेन यो वर्गः लब्धः तद्वर्गस्थाक्षराणि उदात्तगणनेन ग्राह्याणि। अनन्तरं धार्या गणने यादृशी संख्या लब्धा तां दशशो विभज्य अवशिष्ट संख्यया वर्गस्थाक्षरदशके तादृशसंख्यया निर्दिष्टं गृह्णीयात्। वर्गस्थाक्षरदशकमेवं क - का - कि - की - कु - कू - के - कै - को - कौ इति। कृ इत्यादि परित्यजेत्। अत्र कस्मिंश्चित् खण्डे उदात्तं पूर्वोक्तं नास्ति यदि तत् खण्डे स्वरिते यादृशी संख्या लब्ध्वा तया ह वर्गाक्षरं गृह्णीयात्। ह वर्गाक्षराणि, एवं ह,य,र,ल,व इति। एवं च अग्न

आयाहि इति प्रथमखण्डे स्वरितानि 10 । पञ्चशो विभागे पञ्चावशिष्यन्ते तेन वर्गान्तिम प वर्गाक्षरं उदात्तं नास्ति। अतः प इत्येतत् हित्वा ह वर्गपञ्चमं वकारं गृह्णीयात्। धारी गणने सप्तत्रिंशत् (37) दशशो विभागे सप्तावशिष्टानि। तेन वे इत्यक्षरं सम्पन्नम्।

द्वितीयखण्डे स्वरितं-6, उदात्त-2, धारी-52, स्वरिते एकमवशिष्टं तेन क इति उदात्तौ द्वौ तेन क वर्गद्वितीयं ख इति, धारी - 52 , शिष्टं द्वयं , तेन खा, इति च क्रमेण विद्यात् एवं अग्ने वे खा इत्यादि आर्चिकछलाक्षरग्रन्थः ज्ञातव्यः। एतादृशछलाक्षरपरिज्ञानेन उदात्तानुदात्तस्वरितप्रचयाख्याः स्वराः असन्दिग्धं ज्ञातुं शक्यन्ते।।

**10.8.पूर्वार्चिकपदानां छलाक्षरविवरणम्-**

प्रथमादि द्वितीयान्तं पदं स्वार वदिष्यते।
पदकाले सदीर्घः स्यात् अभ्यासः पर्वसंज्ञकः।।
संख्याः पदानां मात्रार्णा एष्यन्ते सामशाखिनाम्।
मुद्रया लभ्यते वर्गः अवग्रहेण चाक्षरम्।
पदैस्तु लभ्यते मात्रा नावग्रहे हवर्गकम्।।

अनयोरयमर्थः-

प्रथमस्वरादि द्वितीयस्वरान्तं पदं आद्युदात्तमित्यर्थः। स्वारवत् ऋचि स्वरितवत् स्वरितगणनेन यथा वर्गग्रहणं तथा वर्गाक्षरं गृह्णीयात्। सः आद्युदात्तः पदकाले पदपाठे दीर्घः कठिनोच्चारणः भवति (20) एवमङ्कश्च भवति यथा अग्ने इति। अभ्यासः अवग्रहः पर्वसंज्ञकः साम्नि पर्ववत् गृह्णीयात्। पदानां संख्याः मन्त्रार्णाः मात्राक्षरस्थाने साम्नि मात्राणां गणनेन यादृशमक्षरं लभ्यते तदक्षरं पदानां संख्यया गृह्णीयात्। मुद्रया मुद्राशब्दः अनेकार्थः अत्र उदात्तपरः तेनाद्युदात्तोऽत्र ग्राह्यः। तेन वर्गाक्षरं जानीयात्। अवग्रहेण वर्गस्थाक्षरं गृह्णीयात्। पदैः, मात्रा कार्यं भवति साम्नि मात्रया अक्षरक्रमपरिज्ञानं

भवति तद्वत् पदपाठे पदैः अक्षरक्रमो ज्ञातव्यः। अवग्रहाभावे ह वर्ग जानीयात्। ह वर्गः पूर्वमुक्तः। ऋग्वत् वर्ग, वर्गास्थाक्षराक्षर क्रमा विज्ञेयाः। यथा अग्न आयाहीति खण्डे आद्युदात्ताः 33 पञ्चशो विभागे त्रयं शिष्यते तेन वर्ग तृतीयं ट इत्यक्षरं अवग्रहः 9, पञ्चशोविभागे चतुष्टयमवशिष्टम् । तेन ट वर्गस्थ चतुर्थमक्षरं गृह्यते ढ इति। पदानि 121 दशशोविभागे एकं शिष्यते तेन प्रथमाक्षरं ढ इत्येवलब्धम्। तथा च प्रथमखण्डस्य छलाक्षरं ढ इति अतः पदछलाक्षरारम्भे अग्ने ढ डो टे णी इत्यादि दृश्यते। एवं क्रमेण ज्ञातव्यम्।

═══════

**10.9. उत्तर ऋक् छलाक्षरम्-**

1. उप दवि पव — उप,ती-यि-कौ
2. अग्न आनोमित्राऽऽयाही,न्द्राग्नी — अग्न, ल-यि-फौ-ता
3. उच्चा पुनाप्रगाथं प्रदुद्रव — उच्चा, ठी-लु-हु
4. अभित्वाशूप्रगाथं, कयानः तंवोप्रगाथं तरोप्रगाथं — अभित्वा,यी-टा-ही-जु
5. स्वादि,पवस्वमप्रगाथं, इन्द्रमच्छपुरोऽभिप्रि — स्वादि,पौ-प-कि-टि-दि
6. यज्ञाप्रगाथं, एह्यू वयमुत्वाप्रगाथं अधाहि — यज्ञा,यु-यी-च-यि-षट्प्रथमः

इति प्रथमोऽध्यायः।।

1. पान्तं, प्रवइ,वयमुत्वातदिन्द्राय — पान्तं,वा-गौ-पा-ला
2. अयन्त आतूनइ अभित्वावृ इदं वसो — अयन्त, टि-के-य-थौ
3. इदँह्यन्वाऽऽत्वे, योग, इन्द्रसु — इदंह्य, पी-टी-ला-वा
4. एनाप्रगाथं, प्रत्युप्रगाथं,इमाउवांप्रगाथ — एना, तु-वा-चा
5. अस्यप्रत्नानवर्चः — अस्यप्रत्ना, ते-हा-वौ
6. विपश्चित प्रसोमदे प्रगाथं मदच्युताऽया पवस्व एकर्चं, पवत एकर्चं,

प्रसुन्वा एकर्च्चम् विपश्चित, वि-रू-ली-लि षट् द्वितीयः

इति द्वितीयोऽध्यायः।।

1. पवस्ववाचः पवस्वेन्दो वृषासोम वृषाह्यसि पवमानस्यते वयम्
पवस्ववाचो, यी-ह-लु-यौ-ला
2. अग्निन्दू मित्रंवयं इन्द्रमिद्गा चतुर्ऋचमिन्द्रे अग्ना
अग्निन्दू, यौ-वा-फा-हु
3. वृषापवस्व, वृषाशो वृषापवस्व, ट-रि
4. त्वामिद्धिप्रगाथं, अभिप्रवप्रगाथं, त्वामिदाप्रगाथं
त्वामिद्धि, फु-हि-ल
5. यस्तेऽयं पूषा वृषामती यस्ते, चौ-थु-गी
6. एवाह्यसिवीरिन्द्रं विश्वा एवाह्य,ति-री-षट्तृतीयः

इति तृतीयोऽध्यायः।।

1. एते राजा तन्त्वानुम्णानि पञ्चर्चमिषे एत, या-ला-हू-या
2. अग्निना मित्रँहुव इन्द्रेण ताहूवे अग्निना, रि-वि-ति-पी
3. अभिसोमाध्यास तिस्रोवाचई अभिसोम, वु-पी
4. यद्याप्रगाथं, घत्वा तरणिप्रगाथं यद्या, ली-छा-यि
5. तिस्रोवाचउ सुतासो पवित्रन्ते तिस्रो, टा-ला-टु
6. प्रमँहिप्रगाथं तन्ते श्रुधीहवम् प्रमँहि, या-ह-फा,षट् चतुर्थः

इति चतुर्थोऽध्यायः।।

1. प्रत अजीजनत् प्रयद्गा षड्टचम् प्रतआश्वि, वी-पा-भी
2. आशुरर्ष षड्ऋचं हिन्वन्ति आशु, जी-ह
3. जनस्यायंवामिन्द्रोदधीयंवामस्य जनस्य, वे-पी-ठी-चा
4. दक्षसा तवप्रगाथं पुनानोअ पवस्वदक्ष, स्व-ति-चा
5. पिबासो विश्वा योराजाप्रगाथं पिबासो, चा-ची-चि
6. परिप्रि त्वँहिप्रगाथं ऊर्मिणा जनिता परिप्रिया, रि-पौ-फा-फू
7. अग्निंवोवृ इमं इन्द्रजुषस्व अग्निंवो, डा-र-ङ, सप्तपञ्चमः

इति पञ्चमोऽध्यायः।।

1. गोवित् विश्ववित् अधन्विषुस्सप्तर्चम् गोवित्, खी-पा-है
2. प्रकविस्सप्तर्चं यवंयवंचतुरृचं यास्तेधारा प्रकविः, को-हि-हि
3. तवश्रि पुरुरुत्तिष्ठन् इन्द्राग्नीयुवाम् तवश्रियो, बु-य-ही-हा
4. अर्षा उष्वाप्रगाथं यत्सोमचि अर्षा, ला-फ-पु
5. इन्द्रोम स्वादोः इन्द्रोम, खु-व
6. असाव्यभिद्युम्नं प्रगाथं प्राणा जसा इन्दु र्वा
असाव्य, चु-डा-री-ता-पी
7. आते अग्न इन्द्राय असाविसो आते, रा-व-पा, सप्तषष्ठः

इति षष्ठोऽध्यायः।।

1. ज्योतिरसृक्षत वीरतिदशर्चम् ज्योतिः, लु-वी-कै
2. सनादशर्चं, तरत्समचतुर्ऋचमेतेसोमा सनाचसो, चा-हा-वि
3. इमं प्रति भिन्धि यज्ञस्य इमंस्तोम, छौ-हा-चू-टा
4. इन्द्रायेन्दो मृज्यप्रगाथं दशक्षिपः इन्द्रायेन्दो, ल-ति-टि
5. रेवती सुरुपोभेयदिन्द्र रेवती, ठी-कौ-यौ
6. गिरिष्ठा ससुन्वेप्रगाथं तंवस्स सोमा अयापवा
परिस्वा, खा-ली-यि-वा-कि
7. अग्नेत्वमिमानुकं प्रवोचोंप अग्नेत्वन्न, वा-छा-य सप्तसप्तमः

इति सप्तमोऽध्यायः।।

1. प्रकाव्यं द्वादशर्चम् प्रकाव्य, झै
2. असृग्रं द्वादशर्चम् असृग्रं ण
3. मूर्धा प्रवोमित्रायेन्द्राहि चित्रभानो तमीडि मूर्धानं, कु-र-ही-य
4. प्रोअयासी नकिष्टं प्रगाथं प्रोअयासी , ठि-ही
5. सखाय आनि नकिष्टं ये सो सखाय, पि-पु-चि
6. आतेव त्वंन्नइन्द्र यदिन्द्रचित्र आतेव, ठा-ल-पी, षडष्टमः

इति अष्टमोऽध्यायः।।

| | |
|---|---|
| 1. शिशुं एतेसोमाभि नवर्चम् | शिशुञ्ज लु-ति |
| 2. सोमः पुना नवर्चम् | सोमःपुना, दू |
| 3. सोमाअसृग्रन्नवर्चम् | सोमा असृग्रं, भे |
| 4. उत्तेशु पञ्चर्चम् | उत्तेशु, का |
| 5. अयावीत्यपघ्नन्नयापवस्वधा | अयावीती, हि-खा-का |
| 6. अग्निंवो तमिन्द्रंवा | अग्निंवो, टी-छे |
| 7. अध्वर्यो, धर्ता | अध्वर्यो, खा-चा |
| 8. यदिन्द्रप्राक्प्रगाथं उभयं प्रगाथं | यदिन्द्रप्राक्, कि-ची |
| 9. युषक् अभीनो पवस्व सोममहान् | युषक्, लि-सी-हि |
| 10. प्रेष्ठं एन्द्रनो पुरां भिन्दुः | प्रेष्ठं, यी-फे-हि, दशनवमः |

इति नवमोऽध्यायः।।

| | |
|---|---|
| 1. अक्रानेषदेवो दशर्चम् | अक्रान्, टे-दू |
| 2. एषधियाष्टर्चम् | एषधिया, के |
| 3. एष उ षड्टचम् | एष उस्य,बी |
| 4. एषवाजी षड्टचम् | एषवाजी, के |
| 5. एषकविः षड्टचम् | एषकविः, गु |
| 6. ससुतः षड्टचम् | ससुतः, खे |
| 7. यःपा षड्टचम् | यःपा, ती |
| 8. अगन्म महाँ इन्द्रो | अगन्मम, ही-टि |
| 9. जिघ्न तोषिञ्चाध्यासासाविसो | जिघ्नतो, ह-खा-गू |
| 10. श्रायन्तः प्रगाथं यतइन्द्रप्रगाथं | श्रायन्त, लू-बा |
| 11. त्वँसो वीतये परित्यं पवस्व सोममहे उपोषु | त्वंसोम, ली-वौ-जी-का-ही |
| 12. आघाये य एकइ गायन्ति | आघाये, ठ-कि-बी, |

द्वादश दशमः

इति दशमोऽध्यायः।।

1. सुषमि चतुर्ऋचं यदद्योत्वामन्दन्तु सुषमित्, रा-खि-ठि
2. आजा माचित्प्रगाथं उदूत्येप्रगाथं पर्यूषु परिप्रधन्व
आजागृवि, तै-यी-ला-ल-ला
3. सूर्यस्या ग्निन्नरो, आयङ्गौः सूर्यस्य, ग-डी-छि, त्रय एकादशः

इति एकादशोऽध्यायः।।

1. उपप्रचतुर्ऋचं अग्नेयुंक्ष्वा प्रसून्वा उपप्रय, ति-यी-खै
2. अभ्रातृ प्रगाथं आत्वासहाऽऽसोताप्रगाथं अभ्रातृ, पि-प-या
3. अग्निर्वृत्राऽस्य प्रेषा एतोन्वि अग्नर्वृत्रा, व-रि-यी
4. अग्नेस्तोममभित्रियशाः प्रगाथं यजिष्ठं प्रगाथं
अग्नेस्तोमं, रि-पू-त-ता
5. यमग्ने साकमु पिबासु प्रगाथं त्रिरस्मै यमग्ने, ठा-वू-ल-चे
6. अभिवायुं यज्जामत्स्य अभिवायुं, खे-पे-बि, षट्द्वादशः

इति द्वादशोऽध्यायः।।

1. पवस्ववृ पञ्चर्चं प्रत्यस्मै चतुर्ऋचं पवस्ववृ, ची-ठ
2. बभ्रवे षड्ऋचं उद्घेद बभ्रवे , यू-ती
3. विभ्राट् क्रुतुं प्रगाथं अद्याद्या प्रगाथं विभ्राट्, जि-ल-वी
4. जनीयन्तो एकर्चं उतनप्रिया एकर्चं तत्सवितुरेकर्चं, सोमानामेकर्चं अग्न आयूँष्येकर्चं, तानश्शक्तं, युञ्जन्ति जनीयन्तो, रौ-हौ-य-पा-य
5. अयँसो त्वमग्ने होतादेवो अयंसो, घी-हौ-रा
6. आसुते तदिदास त्रिकद्रुकेषु आसुते, च-णी-थि, षट् त्रयोदशः

इति त्रयोदशोऽध्यायः।।

1. अभिप्रगो आनोविश्वा प्रगाथं प्रत्नंपी इममूष्वहमिद्धि
अभिप्रगो, हा-या-खू-टा-थू
2. अग्नेविश्व त्वेसोम एन्दु नदंव एकर्चम् अग्नेविश्वे डि-ले-चा-व
3. देवोप्रगाथं अदर्श्यग्न आयूँष्यग्नेपावक देवो, लि-हा-फ-टौ
4. अवानो अग्न अग्निं हिन्वन्तु पञ्चर्चं अग्निर्मूर्धा

अवानो, वौ-था-ली, चतुश्चतुर्दशः

इति चतुर्दशोऽध्यायः।।

1. कस्ते ईडे उत्तेवृ कस्ते, रु-लि-ह

2. पाहिनो प्रगाथं इनोराजन्, कयाते अग्न आयाह्य प्रगाथं, अच्छानश्शी प्रगाथम् पाहिनो, यि-यो-ट-या-टा

3. अदाभ्यःपुर भद्रोनोप्रगाथमग्नेवाजस्य अदाभ्य, वि-लि-टा

4. विशोवि समिद्धं उपत्वा विशो, टा-या-हु, चतुःपञ्चदशः

इति पञ्चदशोऽध्यायः।।

1. अभित्वापू प्रगाथं प्रवामर्चन्ति चतुर्ऋचं शग्ध्यूषु प्रगाथं त्वंह्येहि प्रगाथं योविश्वा प्रगाथम् अभित्वापू, रि-टा-चु-फौ-पु

2. इमम्मेवरुण एकर्चं कयात्वन्न एकर्चं इन्द्रमिद्दे प्रगाथं विश्वकर्मन्नेकर्चं अयारुचा इमम्मे, व-य-वा-ला-डे

3. उतनोगो एकर्चं शशमानस्यैकर्चं उपनस्सू एकर्चं प्रवाम्महृयमुते गावः उतनो, यौ-व-रौ-का-ह-रा

4. माभेम प्रगाथं इमाउत्वाप्रगाथं यस्यायं प्रगाथं गोमन्नाञ्जते माभेम, वी-रि-त-ल-ले, चतुष्षोडशः

इति षोडशोऽध्यायः।।

1. विश्वेभिरिन्द्रंवो त्वन्नश्चित्र प्रगाथं किमित्ते विश्वे, ही-र-की-ते

2. वायो अधक्षपा अश्वं नत्वा प्रतूर्तिषु प्रगाथं वायो,ता-लु-टि-टा

3. यज्ञइन्द्र त्यमुवस्सत्रा तवत्य यज्ञइन्द्र, पी-ता-ठी

4. नमस्ते समस्य सुमन्मा नमस्ते, प-तौ-यि, चतुस्सप्तदशः

इति सप्तदशोऽध्यायः।।

1. पन्यमात्वावि जरा तद्धो पन्यं, ति-क-ह-फी

2. इदंविष्णुः षड्ऋचं मोषुत्वा प्रगाथं, अस्तावि प्रगाथं,इन्द्राय, कस्तं प्रगाथम् इदं विष्णु , टू-ढी-टा-हा-यि

3. एदु तंगूप्रगाथं आसोम प्रगाथं वयमेन प्रगाथं इन्द्राग्नीरोचना

कईवेद एदुम, क-या-तु-खा-क-ही

4. पवमाना असृक्षत तोशा उपत्वारण्व ऋतावानम्

पवमाना असृक्षत,फ-र-य-का, चतुरष्टादशः

इति अष्टादशोऽध्यायः।।

1. अग्निः प्रत्नेन उत्तेशुष्मासो अस्थुः चतुर्ऋचं आमन्द्रैर्यथागौरोप्रगाथं त्वमङ्ग प्रगाथम् अग्निः प्रत्ने, ली-पी-छा-घ-का

2. प्रतिष्यैषो उषस्तच्चित्रमश्विना प्रतिष्या, लि-लि-हि-भा

3. अग्निन्तं महेनः प्रतिप्रि अग्निन्तं मन्ये, घु-तु-वा

4. अबोध्यग्निरिदमाभा अबोध्यग्नि, लि-म-लो

5. एताउत्या अबोध्यग्निर्ज्मः प्रतेधारा चतुर्ऋचम्

एताउत्या, कि-छा-ती, पञ्चएकोनविंशः

इति एकोनविंशोऽध्यायः।।

1. प्रास्याधारा एषब्रह्मा आत्वारथमायः पुरमग्नेतमद्य

प्रास्यधारा, यि-प-वि-छ-चि

2. अग्नेविवस्व प्रगाथं विधुमस्ति बण्म प्रगाथं

अग्नेविवस्व, ला-घे-ली-त

3. उपनो प्रवोमहे यदिन्द्रया प्रगाथं श्रुधीहवं वि उपनो, री-हि-ता-बा

4. प्रोष्वस्मै रेवाँ इद्रे एन्द्रयाहि पवस्वसोममन्दयन्

प्रोष्वस्मै, टि-ति-व-रौ

5. अग्निंहोताऽग्ने तव षड्ऋचम् अग्निँ होता, ठी -दि

6. प्रसो अग्ने प्रगाथं तमोषधीरेकर्चं अग्निरिन्द्रा एकर्चं योजागा एकर्चं अग्निर्जागा एकर्चं मनस्सखिभ्यः पूर्वाग्निर्ज्योतिः

प्रसो अग्ने, यी-रि-या-या-वा-यु-ठा

7. यदिन्द्राहमापोहिष्ठा वात आवात्वभिवाजी नाकेसु

यदिन्द्रा, पि-वा-पौ-पु-खु, सप्तविंशतिः

इति विंशोऽध्यायः।।

1. आशु बृहस्पतेऽभिगोत्राणि आशुश्शिशा, फे-हे-च
2. उद्धर्षयामीषां कङ्काः उद्धर्षय, चु-ठा-या
3. विरक्षो मर्माणिते मृगोन विरक्षो, थि-वी-कू, त्रय एकविंशतिः

इति एकविंशोऽध्यायः।।

इति उत्तर ऋक् छलाक्षरम्।।

10.10. **उत्तरपदछलाक्षरम्।।**

1. उप दवि पव उप, चा-ढी-टे
2. अग्न आनोमित्राऽऽयाहीन्द्राग्नी अग्न, ठि-ङु-फी-गे
3. उच्चा पुना प्रगाथं प्रतूद्रवा पुना, दा-जो
4. अभित्वाशू प्रगाथं कयानः तंवो प्रगाथं तरो प्रगाथम्
अभित्वा, चो-खी-धा-को
5. स्वादि पवस्वमप्रगाथं इन्द्रमच्छ पुरोऽभिप्रि
स्वादि, तै-छ-ते-छि-बि
6. यज्ञाप्रगाथं एह्यूवयमुत्वा प्रगाथं अधाहि यज्ञा, पै-ती-त-टि

इति प्रथमोऽध्यायः।।

1. पान्तं प्रवइ वयमुत्वा तदिन्द्राय पान्तं, गा-धै-डो-फी
2. अयन्त आतूनइ अभित्वावृ इदंवसो अयन्त, नौ-दै-गै-छे
3. इदँ ह्यन्वात्वे योग इन्द्रसु इदं, पे-पु-ति-तु
4. एना प्रगाथं प्रत्युप्रगाथं इमा उवां प्रगाथं एना, भा-डि-छो
5. अस्य प्रत्नानवर्चः अस्य, जे-टौ-ट
6. विपश्चित प्रसोमदे प्रगाथं मदच्युताया पवस्व एकर्च पवत एकर्च
प्रसुन्वा एकर्चम् विपश्चित्, यु-है-ती-त

इति द्वितीयोऽध्यायः।।

1. पवस्ववाचः पवस्वेन्दो वृषासोम वृषाह्यसि पवमानस्यते वयम्
पवस्व, कि-है-ढे-गु

2. अग्निन्दू मित्रंवयं इन्द्रमिद्गा चतुर्‌ऋचमिन्द्रे अग्नि, झ-गि-पि-मे
3. वृषापवस्व वृषाशो वृषा, वे-कि
4. त्वामिद्धि प्रगाथं अभिप्रव प्रगाथं त्वामिदा प्रगाथं त्वामि, छि-थौ-ब
5. यस्तेऽयंपूषा वृषामती यस्ते, चा-हू-जि
6. एवाह्यसिवीरेन्द्रं विश्वा एवा, कु-ख

इति तृतीयोऽध्यायः।।

1. एते राजा तन्त्वानृम्णानिपञ्चर्चमिषे एते, पो-दु-ढी-धु
2. अग्निना मित्रँहुव इन्द्रेण ताहुवे अग्नि, था-जा-ठा-ढै
3. अभिसोमाध्यासः तिस्रोवाचई अभि, ध-ञी
4. यद्या प्रगाथं घत्वा तरणि प्रगाथं यद्या, वू-ठ-गि
5. तिस्रो वाचउ सुतासो पवित्रन्ते तिस्रो, चौ-ङा-च
6. प्रमँ हि प्रगाथं तन्ते श्रुधीहवम् प्रम, झी-गो-चु

इति चतुर्थोऽध्यायः।।

1. प्रत अजीजनन् प्रयद्गा षड्ऋचम् प्रते, नू-कि-ब
2. आशूरर्ष षड्ऋचं हिन्वन्ति आशु, झौ-गि
3. जनस्यायंवामिन्द्रोदधीयं वामस्य जनस्य, नी-गि-प-ङौ
4. दक्षसा तव प्रगाथं पुनानो अ पवस्व, ता-यै-वू
5. पिबासो विश्वा योराजा प्रगाथं पिबा, ढो-प-छ
6. परिप्रि त्वँहि प्रगाथं ऊर्मिणा जनिता परि, दु-भा-छू-बि
7. अग्निंवोवृ इमं इन्द्रजुषस्व अग्निंवो, पु-थि-ख

इति पञ्चमोऽध्यायः।।

1. गोवित् विश्ववित् अधन्विषुस्सप्तर्चम् गोवित्, बी-बू-दौ
2. प्रकविस्सप्तर्चं यवंयवं चतूर्‌ऋचं यास्ते धारा प्रकवि, ञै-दे-खा
3. तवश्रि पूरुरुत्तिष्ठन् इन्द्राग्नीयूवाम् तव, फ-छै-मो-छी
4. अर्षा उष्वा प्रगाथं यन्सोमचि अर्षा, रे-फै-थु
5. इन्द्रोम स्वादोः इन्द्रो, टो-ठे

| | |
|---|---|
| 6. असाव्यभिद्युम्नं प्रगाथं प्राणा जसा इन्दुर्वा | असावि, जू-थ-पू-जो-ठै |
| 7. आते अग्न इन्द्राय असाविंसो | आते, जु-सा-झी |

इति षष्ठोऽध्यायः

| | |
|---|---|
| 1. ज्योतिरसृक्षत वीरतिदशर्च | ज्योति, चु-रे-नै |
| 2. सनादशर्चं तरत्समचतुर्ऋचमेतेसोमा | सना, प्लु-छा-दा |
| 3. इमं प्रति भिन्धि यज्ञस्य | इमं, झे-चा-तो-ण |
| 4. इन्द्रायेन्दो मृज्य प्रगाथं दशक्षिपः | इन्द्रा, जू-पे-वी |
| 5. रेवती सूरूपो भेयदिन्द्र | रेव, चु-जो-जि |
| 6. गिरिष्ठा ससुन्वे प्रगाथं तंवस्ससोमा अयापवा-परि, | फै-क-ठु-ज्यै-भे |
| 7. अग्नेत्वमिमानूकं प्रवोर्चोप | अग्ने, फौ-ढू |

इति सप्तमोऽध्यायः।।

| | |
|---|---|
| 1. प्रकाव्यम् द्वादशार्चम् | प्रका, ण्यू |
| 2. असृग्रं द्वादशर्चम् | असृग्र, मू |
| 3. मूर्धा प्रवोमित्रायेन्द्रायाहि चित्रभानो तमीडि | मूर्धा, मी-टी-ठु-जे |
| 4. प्रो अयासी नकिष्टं प्रगाथं | प्रोअ, झै-चू |
| 5. सखाय आनि ज्यक्षा येसो | सखा, मौ-गा-टि |
| 6. आतेव त्वन्नइन्द्र यदिन्द्रचित्र | आते, णै-ढा-बू |

इति अष्टमोऽध्यायः।।

| | |
|---|---|
| 1. शिशुं एतेसोमामि नवर्चम् | शिशुं, प्ये-भी |
| 2. सोमःपुना नवर्चम् | सोमः, भ्यो |
| 3. सोमा असृग्रन्नवर्चम् | सोमा, ञ्रु |
| 4. उत्तेशु पञ्चर्चम् | उत्ते, थै |
| 5. अयावीत्यपघ्नन्नयापवस्वधा | अया, भू-यु-ली |
| 6. अग्निंवो तमिन्द्रं वा | अग्निंवो, बि-धो |
| 7. अध्वर्यो, धर्ता | अध्वर्यो, लि-था |
| 8. यदिन्द्रप्राक्प्रगाथं उभयं प्रगाथं | यदि, क-घु |

9. युषक् अभीनो प स्वसोममहान् युषक्, चा-जु-छा
10. प्रेष्ठं एन्द्रनो पुरां भिन्दुः प्रेष्ठं, खु-पै-फू

इति नवमोऽध्यायः।।

1. अक्रानेषदेवो दशर्चम् अक्रान्, प-ङि
2. एषधियाष्टर्चम् एष, ड्रा
3. एष उ षड्टचम् एष, च्यु
4. एषवाजी षड्टचम् एष, ङ्यु
5. एषकविः षड्टचम् एष, ट्री
6. ससुतः षड्टचम् ससुतः, प्ल
7. यः पा षड्टचम् यः, पा-त्र
8. अगन्म महाँ इन्द्रो अगन्म, चू-थ्य
9. जिघ्न तोषिङ्घाध्यासासाविसो जिघ्न, ण्यै-घ-धै
10. श्रायन्तः प्रगाथं यतइन्द्र प्रगाथम् श्राय, छौ-ठ्यो
11. त्वँसो,वीतये,परित्यं,पवस्व सोममहे उपोषु त्वंसो, फ्यै-ङ-क्य-ये-जि
12. आघाये यराकइ गायन्ति आघा, कै-छ-धु

इति दशमोऽध्यायः।।

1. सुषमि चतुर्ऋचं यदद्योत्वामन्दन्तु सुषमि, फि-झ-फे
2. आजा माचित्प्रगाथं उदुत्ये प्रगाथं पर्यूषु परिप्रधन्व आजा, त-मा-के-दू-क
3. सूर्यस्याग्निन्नरो आयङ्गौः सूर्यस्य, झो-जी

इति एकादशोऽध्यायः।

1. उपप्रचतुर्ऋचं अग्नेयुँक्ष्वा प्रसुन्वा उपप्र, ने-जे-भै
2. अभ्रातृ प्रगाथं आत्वासहासोता प्रगाथं अभ्रातृ, चौ-ड्य-चे
3. अग्निर्वृत्रास्यप्रेषा एतोन्वि अग्निर्वृ, झी-द्यु-लो
4. अग्नेस्तोममभित्रि यशाः प्रगाथं यजिष्टं प्रगाथं अग्ने, जे-झी-ठु-झु

5. यमग्ने साकमु पिबासु प्रगाथं त्रिरस्मै यमग्ने, डे-णे-ष-बू
6. अभिवायुं यज्जा मत्स्य अभिवा, छू-डै-बै

इति द्वादशोऽध्यायः।।

1. पवस्ववृ पञ्चर्च प्रत्यस्मै चतुर्ऋचं पवस्व, झो-थ
2. बभ्रवे षड्टचं उद्घेद बभ्र, थ्यू-ढो
3. विभ्राट् क्रतुं प्रगाथं अद्याद्य प्रगाथं विभ्राट्, थो-गि-गो
4. जनीयन्तो एकर्च उतनप्रिया एकर्च तत्सवितुरेकर्च सोमानामेकर्च अग्न आयूँष्येकर्च तानश्शक्तं युञ्जन्ति जनी, ठ-ठि-टा-गि-भु
5. अयँसो त्वमग्ने होतादेवो अयं-धू-पु-दि
6. आसुते तदिदास त्रिकद्रुकेषु आसुते-टा-तौ-धू

इति त्रयोदशोऽध्यायः।।

1. अभिप्रगो आनोविश्वा प्रगाथं प्रत्नंपी इममूष्वहमिद्धि अभि, दु-बा-फि-बू-टू
2. अग्ने विश्वे त्वेसोम एन्दु नदंव एकर्चम् अग्ने, थे-थू-ले-ता
3. देवोप्रगाथं अदर्श्यग्न आयूँष्यग्नेपावक देवो, छै-टू-णै-भि
4.अवानो अग्न अग्निं हिवन्वन्तु पञ्चर्च अग्निर्मूर्धा-अवानो, झै-झौ-ता

इति चतुर्दशोऽध्यायः।।

1. कस्ते ईडे उत्तेबृ कस्ते, नी-ता-ब
2. पाहिनो प्रगाथं इनोराजन् कयाते अग्न आयाह्य प्रगाथं अच्छानश्शी प्रगाथम् पाहि, पो-झी-बे-डी-मे
3. अदाभ्यः पुर भद्रोनो प्रगाथमग्नेवाजस्य अद, ते-छो-फै
4. विशोवि समिद्धं उपत्वा विशोवि-कै-ढू-ज्ञौ

इति पञ्चदशोऽध्यायः।।

1. अभित्वापू प्रगाथं प्रवामर्चन्ति चतुर्ऋचं शग्ध्यूषु प्रगाथं त्वंह्येहि प्रगाथं योविश्वा प्रगाथं अभित्वा, प्यू-दि-झे-फो-टी

2. इमम्मेवरुण एकर्चं कयात्वन्न एकर्चं इन्द्रमिद्दे प्रगाथं विश्वकर्म्मन्नेकर्चं अयारुचा — इमं मे, की-या-वु-था-ञु
3. उतनो गा एकर्चं शशमानस्यैकर्चं उपनस्सू एकर्चं प्रवाम्मह्यमुते गावः — उ तन-जू-टौ-ठी-ड्रु-धै-ब
4. माभेम प्रगाथं इमाउत्वा प्रगाथं यस्यायं प्रगाथं गोमन्नाञ्जते — माभे, जो-ब-जे-धी-फ

इति षोडशोऽध्यायः।।

1. विश्वेभिरिन्द्रंवो त्वन्नश्चित्रः प्रगाथं किमित्ते — विश्वे, ठू-दी-द-भी
2. वायो अधक्षपा अश्वंनत्वा प्रतूर्तिषु प्रगाथं — वायो, टि-बू-ध-है
3. यज्ञइन्द्र त्यमूवस्सत्रा तवत्य — यज्ञ, कि-झे-चै
4. नमस्ते समस्य सुमन्मा — नमस्ते, चु-र्ये-बा

इति सप्तदशोऽध्यायः।।

1. पन्यमात्वावि जरा तद्वो — पन्यं, ङा-का-झौ-फै
2. इदंविष्णुः षड्टृचं मोषुत्वा प्रगाथं अस्तावि प्रगाथं इन्द्रायगो कस्तं प्रगाथम् — इदंवि-चा-त-की-भो-धि
3. एदु तंगूप्रगाथं आसोमप्रगाथं वयमेन प्रगाथं इन्द्राग्नी रोचना कईवेद — एदु, खु-दौ-खु-त-ति-छो
4. पवमाना असृक्ष तोशा उपत्वारण्व ऋतावानम् — पवमाना, ले-ने-नै-ञै

इति अष्टादशोऽध्यायः।।

1. अग्निः प्रत्नेन उत्तेशुष्मासो अस्थुः चतुर्ऋचं आमन्द्रैर्यथागौरो प्रगाथं त्वमङ्ग प्रगाथम् — अग्नि, डै-था-का-छौ-ता
2. प्रतिष्यैषोषस्तच्चित्रमश्विना — प्रतिष्य, झ-छि-मे-ढ्वै
3. अग्निन्तं महेनः प्रतिप्रि — अग्निंतं, डैः-की-कि
4. अबोध्यग्निरिदमाभा — अबोधि, छौ-झ-भौ
5. एताउत्या अबोध्यग्नजर्मः प्रते धारा चतुर्ऋचम् — एता, ञु-घु-थै

इति एकोनविंशोऽध्यायः।।

1. प्रास्य धारा एषब्रह्म आत्वारथमायः पुरमग्नेतमद्य
प्रास्य, द्य-टौ-फा-ञौ-तू
2. अग्ने विवस्व प्रगाथं, विधुन्द्रास्ति बण्म प्रगाथं
अग्नेवि, गा-नो-ठु-ढी
3. उपनो प्रवोमहे यदिन्द्रया प्रगाथं श्रुधीहवं वि उपनो, दो-नी-वु-कू
4. प्रोष्वस्मै रेवाँ इद्रे एन्द्रयाहि पवस्वसोममन्दयन् प्रोष्व, दे-वी-हू-फे
5. अग्निं होताग्नेतव षड्टचं अग्निं हो , णि-दी
6. प्रसो अग्ने प्रगाथं तमोषधीरेकर्चं अग्निरिन्द्रा एकर्चं योजागा एकर्चं अग्निर्जागा एकर्चं नमस्सखिभ्यः पूर्वाग्निर्जोतिः
प्रसो, ल्वे-बे-य-थू-र्ये-खि-तू
7. यदिन्द्राहमापोहिष्ठा वात आवात्वभिवाजी नाकेसु
यदिन्द्रा, डु-छे-गा-ढ्यु-ढु

इति विंशोऽध्यायः।।

1. आशु बृहस्पतेऽभिगोत्राणि आशु-तो-दु-ढु
2. उद्धर्षयामीषां कङ्काः उद्धर्षय, कू-ञा-गे
3. विरक्षो मर्माणिते मृगोन विरक्षो, ध्य-ञा-थै

इति एकोविंशोऽध्यायः।।

इति उत्तरऋक् छलाक्षरम्।।

## 10.11. उत्तरऋक्पद हितवाक्यम्।।

1.

वेदोधर्मायैवादेशोत्र ।।1।। अन्नं हि प्राश्यं प्रशस्तं च ।। 2।।
इन्दु भुक् ।।3।। प्रशस्तभूत ।।4।। ब्रूयाच्छान्तोऽहरहस्साम ।।5।।
अतोममजाशू प्रथमः ।।6।।

2.

गायन्ति मम आनन्दम् ।।1।। साम्नि उक्थ्ये गायत्रं तत् ।।2।। अतो भोजनं ते भूयात् ।।3।। भूञ्जीयात् ।।4।। आगतो गौस्संसेव्यः ।।5।। गौर्देयो दोहने द्वितीयः ।।6।।

3.

ते साम्नो नमो वेदे आधाता धर्मे ।।1।। इन्द्र इन्द्राणी तपस्वीह ।।2।। सोमोद्गाता स्यात् ।।3।। आयाहि ।।4।। ब्रूयात्सोमो धर्मान् ।।5।। नमोवाचे तृतीयः ।।6।।

4.

आदित्या वै भर्त्तात्वाम्मा प्रीत्यावैशास्यात् ।।1।। इन्द्राण्याश्शान्तिरितिहासामस्माकम् ।।2।। आयाता श्रीः ।।3।। एते यान्ति ।।4।। यो धर्मो मम ।।5।। सुते हि च दे चतुर्थः ।।6।।

5.

हि नवोगानन्तो वेदे ।।1।। धर्मायायातस्तपोदद्यात् ।।2।। तु याता ब्रुवतां धर्मान् ।।3।। मतो वेदे ते ।।4।। आयातु मांसा ायातु धाता) ।।5।। मयासुज्ञाते विष्णौ (प्रदातुं पात्रे इच्छेत्) ।।6।। अतो मम दोक्षस्व पञ्चमः ।।7।।

6.

प्रातरहरहस्सेव्यो गौश्शान्तिमिच्छेत् ।।1।। अनेनैवोपासनमिच्छेत्प्रीत्याममैव ।। 2।। भूमिञ्च जित्वागाञ्चमयि शान्तिर्वा ।।3।। गेहे ग्रामे गेयान् ।।4।। संसेव्याः ।।5।। गङ्गास्नानेन च मम शान्त्यै ।।6।। प्रातरिमां, स्नायात् षष्ठः ।।7।।

7.

आशु गच्छेत् गौतमो नमोमान्देशाच्छुभे ।। 1।। एतेनैवदेशेनायाते तत् कर्मणे चोदनात् ।। 2।। अग्निरादित्यः शक्रः प्रीतः ।। 3।।

सामश्शान्तेत्र।। 4।। येमन्त्रापदेशी।।5।। तत्र च शान्त्यै गङ्गांभसि।। 6।। ततः स्नायात् सप्तमः ।।7।।

8.

दिविसोमोत्र भवेत् गामैते ।।1।। अन्नैरेवैतेशोभैरनेसगाः ।।2।। इमामादूरे च ततो मन्वामेऽ3बभूव ।। 4।। इमां त्वंतंच सेवेत ।।5।। इमां त्वयि भक्ताऽष्टमः ।।6।।

9.

अनाहूतेनात्रचनैकोहंभुङ्क्षे(ञ्जे) ।।1।। इदानीं सामवेदोऽबोधि ।। 2।। होमसाधरण्याद्वांपालः ।। 3।। शोभनं चैते ।। 4।। शुद्धएवैको गौः ।। 5।। सुषाचा एषु ।।6।। एतेन च ।।7।। सन्तु ।।8।। संसार भयम्।।9।। स्नाते नमोवाचे, नवमः ।।10।।

10.

अग्निना देवः श्रेष्ठेते प्रीतः ।। 1।। गौतम एवैते एव ।। 2।। एते सव सेव्ये।।3।। नव प्रीते वै श्रीः ।।4।। त्वया प्रजात्यैम ।। 5।। स स्वधने नीचैः।। 6।। वामनस्सर्वत्र ।। 7।। अग्निर्विश्वेदेवाः ।।8।। भक्तित्वं याथार्थ्यं हि ।।9।। स्नायात् ।।10।। अनेन नारी शूरा एवैषात।।11।। भोजनत्वमच्छी दशमः ।।12।।

11.

प्रशान्तानां सुनिश्चितत्वम्।।1।। इमे क्रियतं विन्दते।।2।। संसार भयात् एकादशः।।3।।

12.

अन्नं दैविकं नाशान्त्या।।1।। अन्नादि भुक्।।2।। सन्निहिते योगैः।।3।। मानेन वतु धातु।।4।। देवत्राविवासा मया।।5।। सुधायनमान्यहञ्च द्वादशः।।6।।

13.

मम सर्वे अनाभान्ति।।1।। आदित्या इन्द्रश्च शान्त्या।।2।। सुभूरि गुरुः।। 3।। नारायपादौ स्याताम्।।4। वैष्णवी ऐन्द्रवायवौ।।5।। अनेनैवाशु मे प्राप्तम् त्रयोदशः।।6।।

14.

अनादि वेदं तं विदो येऽत्र।।1।। मम देवः पूषा येतेन।।2।। माता पिता वै प्रीतः।।3।। तत्रास्माकं दैवतं भवे चतुर्दशः।।4।।

15.

अग्निर्ममैवदेवतैका।।1।। सरामो राम वेदा तातं विद्यात्।।2।। समाविधानञ्च।।3।। सुवाचा सुभुप्रिया पञ्चदशः।।4।।

16.

नराणां कविषु वादः।।1।।अनेनैवामुत्र।।2।। इन्द्रसामानो च स्नात्वा ब्रूयुः।।3।। सामनि प्रज्ञा शिष्यस्य स्यात् षोडशः।।4।।

17.

एषकरोत्याप्तं विष्णुप्रियाम्।।1।। सामविच्छास्त्रज्ञो वा श्राद्धे।।2।। देवबुध्यै वैतेन।।3।। विजित्यैतान्तं वै सप्तदशः।।4।।

18.

शिष्टावै संविदन्तेऽर्थात्।।1।। सामगस्सर्वत्र देवगुरुः।।2।। सर्वं विन्द्रामश्च मे स्यात्।।3।। एतेनैव ब्राह्मणानां वासोऽष्टादशः।।4।।

19.

एषा च शान्तिर्भवतु श्रावास।।1।। सामगश्शान्त्यै ये विप्राण्योश्शुभे ।।2।। साम्नि हि निपुणाम् ।।3।। वासोविशुद्धिश्चांभसि ।।4।। वसिष्ठसोमसुतः प्रेषयेदेकोनविंशः।।5।।

20.

भक्षेणा नमां सेह प्राशामेच।।1।। इन्द्राणी प्राप्नोतु।।2।। शास्त्रसिद्धाभिरितिचेत्।।3।। माधव एवैतेनेष्टेभव।।4।। रुद्रागाहं

नमस्यामि।।5।। कौशिकोत्राथेतु माधवोदेवः।।6।। आपस्नाने भोजनार्था पानेप्राप्ताविंशः।।7।।

21.

प्रीतश्शुक्रः प्रियान् पुनाति।।1।। सर्वसुरान्नत्वा प्रियाणि।।2।। इमे शान्तबुध्यैवातिथीन् (पूजयेत्)एकविंशः।।3।।

अकारे पञ्चएको वा, आकारे द्वौ षडेववा। इवर्णे सप्तवा त्रिर्वा, उवर्णे चतुरष्टवा। ए ऐ ओ औ तु इत्येते विज्ञेया अनवग्रहाः।।

अवग्रहपरिशिष्टं समाप्तम्।।

**10.12. पूर्वार्चिकमन्त्राणामुत्तरार्चिके पुनरावृत्तिः (259)**

1, 2, 3, 4, 5, 7, 8,11,13,15,17, 21, 25 , 27, 28, 35, 36, 40, 4, 44, 45, 47, 51, 55, 66, 67, 72, 73, 87, 99, 107,108, 109,111,112, 115, 117, 119,121,122,123,124,125,133,134,137,139,147, 150, 152, 153, 155,156,157,158,159,160,161,163,164,165, 167, 168, 169, 170,174,178,179,182,183,184,191,194,197, 198, 207, 220, 222,225,232,233,234,235,236,237,238,239, 240, 242, 243, 245,246,247,248,249,250,251,252,253,256, 259, 261, 267, 269,272,273,274,276,278,279,280,284,290, 297, 302, 303,304,310,311,320,325,328,342,343,344,345, 346, 347, 348,350,352,354,359,370,379,381,383,385,386, 388, 389, 393,398,399,405,406,408,411,414,418,419,421, 425, 427, 428,429,430,432,434,438,444,445,446,448,452, 453, 457, 463,465,467,468,469,470,471,472,473,474,475, 476, 477, 478,479,480,482,483,484,485,487,488,491,492, 493, 495, 497,498,499,500,503,504,505,510,511,512,513, 514, 515, 516,517,518,523,524,525,526,527,528,529,538,

540,541, 542,545,546,547,548,549,552,553,554,557,558, 559,560, 562,564,565,566,568,569,570,571,572,574, 576, 578,579,580,582,583,592,593,596,597,598, 601, 627, 628, 630,631,632.

**10.13. उत्तरार्चिकस्थ मन्त्राणामुत्तरार्चिके पुनरावृत्तिः**

651 / 763, 762 / 1335, 771 / 1275, 774 / 1386, 1145 / 1465, 1329 / 1681, 1331 / 1679, 1464 / 1518, 1575 / 1703, 1576 / 1704, 1577 / 1694, 1578 / 1695.

**10.14.पूर्वार्चिकमन्त्राणामुत्तरार्चिके वारद्वयं पुनरावृत्तिः (4)**

487 (उपोषु जातम्)- 762, 1335, 552 (परित्यं हर्यतम् )-1329,1681
553 (प्रसुन्वानान्धसः) - 774,1386, 627(अग्न आयूँषि)-1464,1518

**10.15.एते सामवेद (102) मन्त्राः ऋग्वेदशाकलसंहितायां न सन्ति तेषां सूची -**

10, 63, 82, 90, 92, 93, 154, 172, 177, 190, 196, 209, 224, 226, 231, 288, 294, 298, 299, 305, 321, 327, 336, 337, 353, 361, 369, 372, 435, 437, 438, 441, 442, 444, 445, 446, 449, 450, 453, 455, 456, 458, 464, 588, 591, 594, 602, 608, 611, 615, 616, 622, 623, 624, 625, 626, 641, 642,643, 644, 645, 646, 647, 648, 649, 650, 952, 953, 954, 1113, 1114, 1115, 1127, 1300, 1301,1302, 1303, 1503, 1504, 1654, 1655, 1656, 1708, 1709, 1710, 1768, 1769, 1770, 1825, 1828, 1829, 1830,1831, 1832, 1833, 1843, 1844, 1845, 1860, 1864, 1869, 1871.

## 10.16. अकारादि मन्त्रानुक्रमणिका

## Our published books

1. Akshapadiya Goutamiyaparasutraprakash, with Commentary and Indices, pp:202, price 100/-, 2012
2. Samavedaranayaniyam Vargaparibhasitaveyaganam Part -1, pp;250, price 200/-, 2012
3. Samavedaranayaniyam Vargaparibhasitaveyaganam Part -2, pp;312, price 200/-, 2013
4. Phullapotam, A commentary on Puspasutra of Ganesh pandit, pp:452, price 300/-, 2013
5. Naradiyasiksa and Naradiyasiksasangrah: with the Vivarana of Bhattasobhakar and Commentary of Narayanaswamy Deekshita, pp.166, price-125/-, 2014
6. Samavedasandhyopasana, pp: 64, price-50/-, 2016
7. Samavedapadapatha, pp 472, price : 750/-, 2016

Ready to Publish

1. Gobhiliya Karmapradipah
2. Jaiminiya uha ushani samaganam
3. Samavediya Karikasangrah
4. Ranayaneyasamaganam
5. Samavediya Sruotaprayogah



| | | |
|---|---|---|
| Name | : | Dr Girijaprasad Shadangi |
| DOB | : | 23.11.1971, |
| Place | : | Kasarada, Dist- Cuttack, |
| State | : | Odisha, Pin-754105, |
| Mothers Name | : | Sarojini Shadangi, |
| Father's Name | : | Haramohan Shadangi. |
| Qualification | : | M.A in Sanskrit, Samaveda Salaxana & Smarta Vidwan, Astabrahmana & Ph.D in Samaveda |
| Working | : | Sri Venkateswara Vedic University, Tirupati |
| Linguistic Proficiency | : | Sanskrit, Hindi, Kannada, Telugu, Odia & English |
| Awards | : | Got Tamrapatra Award for "Samaveda Parangata"Ujjain |
| Books are published | : | Phullapotam, Naradeeyasiksa, Riktantram, Samavedapadapath, Samavedakarikasangrah, Gobhiliyakarmapradipah, Jaiminiya Uhaushaniganam, etc. |
| contacts | : | Email-gpshadangi@gmail.com, Mo-9951051209 |

